पारले

# अब पारले पॉपिन्स का मज़ा चलता जाए, भले ही पैकेट खत्म हो जाए...



## पारले पॉपिन्स के रैपर भेजिए, धमाकेदार उपहार पाइए.

**मुफ्त** पारले पॉपिन्स के 20, रैपर भेजने पर शरारत भरा पज़ल किट. पारले पॉपिन्स के 10 रैपर भेजने पर फन पेड और जंगल बुक स्टिकर.



पारले पॉपिन्स के 4 रेपर भेजने पर जंगल बुक स्टिकर.

* *पॉपिन्स इस भेंट के बिना भी मिलता है.*




अब फलों के नए-नए स्वाद में

जल्दी करो

उपहार बहुत कम हैं.

डाक टिकट लगे लिफाफे पर अपना नाम और पता लिखें और पारले पॉपिन्स के खाली रैपर के साथ इस पते पर भेजें. पॉपिन्स पॉइन्ट, पी. ओ. बॉक्स 907, बम्बई-400057.

फ्रूट जूस या पल्प रहित, अतिरिक्त फ्लेवर सहित.

everest/94/PP/186-hn

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अञ्चलः - | Saree border |
| अभ्यसितुम् - | To practice |
| आलवालम् - | A basin for water round the roof of a tree |
| उरः - | Chest |
| उष्णीषम् - | Turban |
| कालकः - | A scar |
| कोणः - | Corner |
| खेटकः - | Shield |
| गुडः - | Jaggery |
| गुल्मः - | Bush |
| गुहा - | Cave |
| चण्डमारुतः - | Storm |
| चर्वणम् - | Chewing |
| चामरः - | A fan used in temples |
| चित्रकः - | Cheetah |
| तमाखुः - | Tobacco |
| तिन्त्रिणी - | Tamarind |
| नारङ्गम् - | Orange |
| निर्वाचनम् - | Election |
| परम्पारा - | Generation |
| पर्णानि - | Leaves |
| पितृव्यः - | Father's younger brother |
| पूगः - | Areca nut |
| पृथक् - | Separate |
| प्रीणाति - | Loves |
| भीरुः - | Coward |
| मकरः - | Crocodile |
| मषी - | Ink |
| मिष्ठकम् - | Sweetmeat |
| रज्जुः - | Rope |
| लवित्रम् - | Sword |
| वत्सः - | Calf |
| विक्रमः - | Record |
| शिबिका - | Palanquin |
| शिल्पी - | Sculptor |
| शीतला - | Smallpox |
| श्यालः - | Wife's brother |
| सकृत् - | Once |
| स्फुरितम् - | Flashed |
| हलः - | Plough |

# BAND-AID®

## Funtest

हर बैण्ड-एड
फ़नटेस्ट पैक के साथ दो
फ़नस्टिक्स* फ़्री

डॉ. क्वैक
एली
चिंपू
पुसी
पंटर
हूटर
टॉमी
कुकू
रेक्स

जल्दी करो!

## अपने फ़नस्टिक्स* जमा करना शुरू करो. अभी से!

* *खुशबूदार प्लास्टिक क्रेऑन्स*

नियम व शर्तें

1. इस प्रतियोगिता में 4 से 15 वर्ष के बच्चे भाग ले सकते हैं और यह प्रतियोगिता सिर्फ भारतीय नागरिकों के लिए ही है.
2. जॉन्सन एण्ड जॉन्सन और ओगिल्वी एण्ड मेथर से जुड़े कर्मचारी व उनके सगे संबंधी इस प्रतियोगिता में भाग नहीं ले सकते हैं.
3. एक प्रतियोगी जितनी चाहे उतनी एंट्रीस भेज सकता है.
4. हर एंट्री पूरी होनी चाहिए. अधूरी व अस्पष्ट एंट्रीस को गिना नहीं जाएगा.
5. एंट्रीस प्राप्त करने की अंतिम तारीख 28 फरवरी 1995 है. पर हाँ, कंपनी, अंतिम तारीख को बढ़ाने या उसे सीमित करने का पूरा अधिकार रखती है.

जॉन्सन एण्ड जॉन्सन

# दोस्तों!
# बैण्ड-एड®
# फ़नटेस्ट में
# शामिल हो जाओ

इसमें शामिल होना एकदम सरल है. एक स्ट्रिप [पट्टी] को रंगो और कुछ सरल सवालों के जवाब दो. बस! फिर जीतो कई आकर्षक इनाम.

*साथ ही पहले पहुंचने वाली* ***1000*** *एंट्रीस के लिए भी इनाम (इसलिए अपनी एंट्रीस आज ही भेजें!)*













## फ़नस्ट्रिप बनाओ

*इस बैण्ड-एड को फनस्ट्रिप बनाने के लिए अपनी समझदारी लगाओ. इस पर लिखो, ड्राईंग बनाओ, या इसे रंगो. और इस तरह बनाओ इसे एक मज़ेदार फनस्ट्रिप*

**सही जवाबों पर (✓) निशान लगाओ.**

1. एक बैण्ड - एड स्ट्रिप का साइज क्या होता है?
   □ 19 मि मी x 72 मि मी □ 17 मि मी x 70 मि मी □ 21 मि मी x 74 मि मी
2. सिर्फ़ जॉन्सन एण्ड जॉन्सन की बनी बैण्ड - एड पट्टियां ही पूरी तरह से कीटाणुरहित होती हैं.
   □ सही □ गलत
3. एक बैण्ड-एड फ़नटेस्ट पैक में कितनी बैण्ड-एड पट्टियां [हर तरह की] आती हैं?
   □ 20 □ 15 □ 30
4. बैण्ड-एड के पैड पर लगी असरदार दवाई क्या है?
   □ बोरिक पाउडर □ बैन्ज़लकोनियम क्लोराइड □ टिंक्चर आयोडिन
5. भारत में, बैण्ड-एड पट्टियों पर वॉल्ट डिज्नी के कितने कैरेक्टर हैं?
   □ 4 □ 6 □ 2

नाम : ____________________

जन्म : ____________ लिंग : ____________

पता : ____________________

स्कूल : ____________________



6. कोई भी एंट्री वापस नहीं की जायेगी.
7. जीतने वालों को डाक द्वारा सूचित किया जायेगा.
8. जजों का निर्णय अंतिम और मान्य रहेगा.
9. जॉन्सन एण्ड जॉन्सन कारण बताते/न बताते हुए इस स्कीम को बदलने, रद्द करने या वापस लेने का अधिकार रखती है.
10. सभी एंट्री फार्म साधारण डाक द्वारा इस पते पर भेजे जाने चाहिए : द बैण्ड-एड फ़नटेस्ट, द्वारा डेटा बेसिक्स, पोस्ट बॉक्स नं. 16605, बंबई-400019.

Ilvy & Mather 5179 HN

# टीनाया: साहसस्य गमन:, कैल्शियम: बालिका. ''मूल: शक्ति:''







































भव्यानि नि:शुल्क: उपहाराणी!!

ओ! मित्राणि त्वरितं आगच्छ आस्मान् क्रेतुम् २०० ग्रामाणी पार्ले प्रूडन्ट कैल्शियम्++ बन्ध (पार्शव दन्ती चित्राणी) लिख तव नाम:, जन्मतारीख, पाठशाला वर्ग: तथा, प्रति : पार्ले प्राडक्टसि लिमिटेड, निरिलान हाउस, वर्ली, बम्बई ४०० ०२५

1B&W/94/223





# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'


## दूरदर्शनं बालाः च



**सा**मान्यतः एतेषु दिनेषु अध्ययने छात्राणाम् आसक्तिः न्यूना जाता दृश्यते। आसक्तेः अभावतः एव छात्राः परीक्षायां न्यूनान् अङ्कान् प्राप्नुवन्तः सन्ति। एतस्य प्रमुखं कारणं - 'मूर्खाणां पेटिका' इति नामाङ्कितं दूरदर्शनं, तेन प्रसार्यमाणानां कार्यक्रमाणां प्रभावः च इति चिन्तकानाम् अभिप्रायः।

तदा एषः प्रश्नः उदेति यत् - बालैः कियन्तं कालं दूरदर्शनं द्रष्टव्यं, कीदृशाः कार्यक्रमाः बालैः द्रष्टव्याः, कीदृशाः न द्रष्टव्याः इति च केन निर्णेतव्यम् इति। वस्तुतः एतत् गुरुतरं दायित्वं पोषकाणाम् एव।

सद्यःकाले देहलीनगरे किञ्चन सर्वेक्षणं कृतम्। द्विशत-कुटुम्बानां सर्वेक्षणं कृतम्। तद्द्वारा ज्ञातम् अस्ति यत् - ५८% कुटुम्बानां पोषकाः स्वपुत्रैः सह एव दूरदर्शनं पश्यन्ति इति, इतरे ४२% कुटुम्बपोषकाः स्वगृहकार्ये निरताः भवन्ति, तेषां पुत्राः च सदा दूरदर्शनं पश्यन्ति इति च। अतः दूरदर्शनं 'बालपालनकेन्द्र'स्य कार्यं करोति इति वदामः चेत् न अतिशयोक्तिः।

'दूरदर्शनस्य दर्शनं विहाय पठन्तु, गृहपाठं च लिखन्तु' इति यदि उच्यते, तर्हि साहाय्यार्थं पुत्राः अस्मान् आह्वयेयुः इति भीत्या मातापितरः दूरदर्शनस्य दर्शनात् पुत्रान् न निवारयन्ति प्रायः।

दूरदर्शने प्रदर्श्यमानस्य कस्यचित् 'साहस' कार्यक्रमस्य अनुकरणप्रवृत्तिः (निन्दा-ताडन-मारणादि-प्रवृत्तिः) बालेषु अधिकतया दृश्यते। अतः एव ते शालासमयानन्तरम् अपि क्रीडितुं मित्रैः मेलितुं वा न इच्छन्ति, अपि तु दूरदर्शनं द्रष्टुम् इच्छन्ति इति सर्वेक्षणद्वारा ज्ञातम् अस्ति। वस्तुतः एषा प्रवृत्तिः नितराम् आतङ्ककरी अहितसाधिका च।

बालेषु उत्पद्यमानस्य एतादृशस्य दुष्परिणामस्य निवारणार्थं बालानां शारीरक-मानसिक-सामर्थ्यवर्धनार्थं ये कार्यक्रमाः साहाय्यकाः भवन्ति, तादृशानां कार्यक्रमाणां प्रसारार्थं कैश्चित् राष्ट्रैः दूरदर्शने पृथक् 'चानल्' एव कृतम् अस्ति इति श्रूयते। एषः प्रयोगः यशस्वी जातः अस्ति इत्यपि श्रूयते। अतः अस्माकं देशे अपि बालानां निमित्तं दूरदर्शने पृथक् चानल् यदि भवेत्, तर्हि वरं स्यात्।


सम्पुटः - ११ फेब्रवरी - १९९५ सञ्चिका - ११

प्रतिकृतिमूल्यं - रू. ५.०० * वार्षिकं ग्राहकशुल्कं - रू. ६०.००




Sunday, Piano, Nursery Rhymes
It's Morton for me all the time



MORTON
SWEETS

I Love my Sundays ..... Nursery Rhymes and my Mummy close to me and Mortons all the time. It has been our Family's favourite for years and years.

Delicious and yummy in so many flavours. All with the goodness of Creamy Milk, Glucose and Sugar.

Chocolate and Coconut Cookies, Rose Eclairs, Supreme Chocolate and Coconut Toffees, Lacto Bonbons Mango King and so many other delicious treats.

Um m m m m Every bite a yummy delight.

A lifetime of real goodness

**MORTON CONFECTIONERY & MILK PRODUCTS FACTORY**
P.O. : Marhowrah 841 418 Dist. : Saran, Bihar

CC/M-1/93

**Caution Notice :**
MORTON and its wrappers are registered trade mark of Upper Ganges Sugar Industries Ltd. Any infringement of trade mark rights is liable to prosecution.

वार्ताविशेषः -

# श्रीलङ्कायां नूतनः कश्चित् विक्रमः

**श्री**लङ्कायाः प्रधानमन्त्रित्वेन श्रीमती चन्द्रिकाकुमारतुङ्गा अगस्त्मासस्य १९ दिनाङ्के प्रमाणवचनं पठितवती। एतस्याः प्रधानमन्त्रिण्याः वैशिष्ट्यं नाम एतस्याः माता पिता चापि भूतपूर्वौ प्रधानमन्त्रिणौ एव! चन्द्रिका इदानीं ४९ वर्षीया।

चन्द्रिकायाः पिता एस्.डब्ल्यु.आर्.डि. बण्डारनायकवर्यः १९५६ तः १९५९ वर्षे स्वमरणपर्यन्तम् अपि प्रधानमन्त्रिपदव्याम् आसीत्। तस्य मरणानन्तरं तस्य पत्नी सिरिमावो बण्डारनायकवर्या प्रधानमन्त्रिणी जाता। तदा सिरिमावोवर्या 'प्रपञ्चस्य प्रथमा प्रधानमन्त्रिणी' इति ख्यातिं प्राप्तवती। सा १९६० तः १९६५ पर्यन्तम्, अनन्तरं १९७० तः १९७७ पर्यन्तं च अधिकारावधौ आसीत्।

श्रीमत्या चन्द्रिकावर्यया प्रधानमन्त्रिपदव्याः प्राप्तेः अनन्तरं मासत्रयाभ्यन्तरे एव तन्नाम नवेम्बर्मासस्य नवमे दिनाङ्के अध्यक्षस्य चयनार्थं निर्वाचनं प्रवृत्तम्। तस्मिन् निर्वाचने श्रीमती चन्द्रिका पीपल्स् अलियेन्स् पक्षस्य अभ्यर्थित्वेन स्थित्वा ६२% अपेक्षया अपि अधिकं मतानि प्राप्य जयं प्राप्तवती। नवेम्बर्मासस्य १२ तमे दिनाङ्के सा अध्यक्षपदव्याः प्रमाणवचनं स्वीकृतवती। श्रीलङ्कायाम् अध्यक्षपदवीम् आरूढा प्रथमा महिला श्रीमती चन्द्रिकाकुमारतुङ्गा।



श्रीमती चन्द्रिका अध्यक्षपदवीं स्वीकृत्य २२ सदस्यात्मके स्वमन्त्रिमण्डले अन्यतमां स्वमातरं सिरिमावोबण्डारनायकवर्यां प्रधानमन्त्रित्वेन नियोजितवती। अतः श्रीमती सिरिमावो तृतीयवारं देशस्य प्रधानमन्त्रिणी जाता। नवेम्बर् १४ दिनाङ्के सिरिमावो प्रमाणवचनं स्वीकृतवती।

श्रीलङ्कास्वतन्त्रपक्षस्य स्थापकः नायकः च बण्डारनायकवर्यः १९५९ तमे वर्षे अकस्मात् हतः अभवत् इति कारणतः, तदा तस्य पत्नी पत्युः स्थानं अलङ्कृतवती इत्यत्र न किमपि आश्चर्यम्। १९६० तमे वर्षे प्रवृत्ते

निर्वाचने श्रीमत्याः सिरिमावो बण्डार-नायकवर्यायाः पक्षः बहुमतैः जयं प्राप्तवान्। तदा श्रीमती सिरिमावोबण्डारनायकवर्या देशस्य प्रधानमन्त्रिणी जाता। सा १९७० तमे वर्षे वामपक्षीयाणां साहाय्येन अधिकारं प्राप्य १९७७ पर्यन्तम् अपि स्वकीयम् अधिकारं रक्षितवती आसीत्। १९७७ तमे वर्षे प्रवृत्ते निर्वाचने प्रधानविरोधपक्षः युनैटेड् नेषनल् पक्षः जयं प्राप्तवान् इति कारणतः तत्पक्षस्य नायकः जयवर्धनः श्रीलङ्कादेशस्य अध्यक्षः अभवत्।



१९८९ तमे वर्षे अपि युनैटेड् नेषनल् पक्षः एव जयं प्राप्तवान्। तावत्पर्यन्तम् अपि प्रधानमन्त्रित्वेन स्थितः प्रेमदासः अध्यक्षः जातः। १९९३ तमे वर्षे प्रेमदासस्य हननम् अभवत्। तदा विजयतुङ्गवर्यः अध्यक्षः अभवत्। प्रेमदासस्य मरणसमये विजयतुङ्गवर्यः देशस्य प्रधानमन्त्री आसीत्। इदानीं श्रीमती चन्द्रिकाकुमारतुङ्गा देशस्य चतुर्थी अध्यक्षा जाता अस्ति।

१९९३ तमे वर्षे एस्.एल्.एफ्.पि. कैश्चित् पक्षैः सह पीपल्स् अलियेन्स् नामकसमितिम् अरचयत्। सः पक्षः चन्द्रिकावर्यां नायिकात्वेन पर्यगणयत्। तस्मिन् वर्षे प्रादेशिकं निर्वाचनं प्रवृत्तम्। तस्मिन् निर्वाचने अधिकजनसंख्यायुक्तात् पश्चिमप्रदेशात् निर्वाचिता चन्द्रिका मुख्यमन्त्रिणी जाता।

श्रीमती चन्द्रिका उक्तवती अस्ति – 'यदि अहम् अध्यक्षपदवीं प्राप्नोमि, तर्हि राज्यशासने परिवर्तनं भविष्यति। अध्यक्षसर्वकारपद्धतिः न भविष्यति, अपि तु संसदीयपद्धतिः व्यवहारपथे आयास्यति। एषः अस्माकं पक्षस्य निर्णयः' इति। जुलैमासाभ्यन्तरे एतत् परिवर्तनं भवेत्। तस्मिन् समये श्रीमती चन्द्रिका प्रधानमन्त्रिणी भवेत्, तस्याः माता श्रीमती बण्डारनायकवर्या च अध्यक्षपदवीं प्राप्नुयात् इति विमर्शकानां चिन्तनम्। षट्-सप्त-मासाभ्यन्तरे मातापुत्र्योः पदव्याः परिवर्तनं भवेत् इति ऊह्यते। यदि विमर्शकानां चिन्तनानुसारम् एव प्रवर्तेत, तर्हि श्रीलङ्कायां पुनरपि नूतनः कश्चन विक्रमः साधितः भविष्यति।



# वामना राक्षसी

मातापितृविहीनायाः शकुन्तलायाः अनुपमं सौन्दर्यम्। तस्याः विमातुः द्वे पुत्र्यौ अपि कुरूपिण्यौ आस्ताम्।

''भवती अस्मान् पीडयितुम् एव जन्म प्राप्तवती अस्ति । भवत्याः कारणतः मम पुत्र्योः विवाहयोगः एव नास्ति'' इति सदा शकुन्तलां निन्दति स्म तस्याः विमाता।

केनापि प्रकारेण गृहात् शकुन्तला निष्कासनीया इति विचिन्त्य शकुन्तलायाः विमाता निर्णीतवती यत् - तद्ग्रामस्थेन एव धनिकेन वृद्धमुकुन्देन सह शकुन्तलायाः विवाहः कारणीयः इति। एतं विषयं ज्ञात्वा अतीव दुःखिता शकुन्तला सायङ्कालसमये गृहात् निर्गत्य अरण्यसमीपस्थं तिन्त्रिणीवनं गतवती।

तस्मिन् तिन्त्रिणीवने काचित् वृद्धा आसीत्। काष्ठसङ्ग्रहार्थं शकुन्तला यदा अरण्यं गच्छति स्म, तदा प्रतिदिनम् अपि तां वृद्धां पश्यति स्म। सा वृद्धा काचित् मन्त्रवादिनी इति सर्वे वदन्ति स्म।

वृद्धा मन्त्रवादिनी तिन्त्रिणीवनम् आगतां शकुन्तलां दृष्ट्वा - ''अन्धकारसमये इदानीम् अत्र किमर्थम् आगतवती भवती ?'' इति पृष्टवती।

तदा शकुन्तला स्वदुःखं विस्तरेण वृद्धां निवेदितवती।

अनन्तरं वृद्धा शकुन्तलाम् उद्दिश्य - ''भवतीं पीडयितुं भवत्याः विमातुः अधिकारः नास्ति । मन्त्रवादिन्या मम भगिन्या सह बहोः कालात् अस्मिन् एव कुटीरे अहं वासं कृतवती । किन्तु दशभ्यः वर्षेभ्यः पूर्वं मम भगिनी दिवङ्गता । एकाकिजीवनं मयि अतीव खेदं जनयति । अतः अनुरूपेण वरेण सह यावत् भवत्याः विवाहः न भविष्यति, तावत्पर्यन्तं भवती अत्रैव मया सह निवसतु। भवत्याः विमाता

'अनामिका'



अत्र आगत्य यदि भवतीं पीडयितुम् इच्छति, तर्हि तां क्षणाभ्यन्तरे एव भस्मसात् करोमि'' इति उक्तवती कोपेन।

मन्त्रवादिन्याः वृद्धायाः समीपे एकः वृषभशकटः आसीत्। सा प्रतिमासम् अपि अरण्यसमीपस्थात् तिन्त्रिणीवनात् गोणीद्वयपरिमितां तिन्त्रिणीं वृषभशकट-द्वारा राजधानीं नीत्वा विक्रयणं करोति स्म। तिन्त्रिण्याः विक्रयणात् प्राप्तेन धनेन अत्यावश्यकानि वस्तूनि आनयति स्म। अस्मिन् मासे सा वृद्धा तिन्त्रिणीविक्रयणार्थं शकुन्तलां प्रेषितवती राजधानीं प्रति।

शकुन्तला शकटद्वारा अरण्यमार्गेण राजधानीं प्रति प्रस्थितवती। मध्येमार्गं कस्माच्चित् वृक्षात् काचित् वामना ब्रह्मराक्षसी अधः उत्प्लुत्य शकटस्य पुरतः स्थित्वा सन्तोषेण करताडनं कुर्वती उक्तवती - ''कियत्सुन्दरी बालिका भवती! भवती देवकन्यासदृशी'' इति।

यद्यपि सा राक्षसी भयङ्करी आसीत्, तथापि शकुन्तला धैर्येण उक्तवती - ''तिन्त्रिण्याः विक्रयणार्थं राजधानीं गच्छन्ती अस्मि। अपसरतु भवती। मम विलम्बः जातः'' इति।

शकुन्तलायाः वचनं श्रुत्वा वामना राक्षसी म्लानमुखी सती उक्तवती - ''वत्से! माम् अपि भवती राजधानीं नयतु कृपया। अहं वामना इति कारणतः अन्ये राक्षसाः माम् उपहसन्ति। अतः अत्र वृक्षे एकाकिनी अहं जीवनं यापयन्ती अस्मि। एतादृशं जीवनं मम खेदजनकम् अस्ति'' इति।

एतत् श्रुत्वा शकुन्तलायां राक्षस्याः विषये करुणा उत्पन्ना। सा राक्षसीम् उद्दिश्य - ''भवतु। भवतीम् अपि राजधानीं नेष्यामि। भवतीं गोण्यां संस्थाप्य नेष्यामि। श्वासोच्छ्वासार्थं सम्भाषणार्थं च भवत्याः आनुकूल्यं यथा स्यात्, तथा नासिकासमीपे मुखसमीपे च गोण्याः रन्ध्रं करोमि। एतत् भवत्या अनुमन्यते वा?'' इति पृष्टवती।

तदा राक्षसी उक्तवती - ''भवती मां 'राक्षसी' इति मा आह्वयतु। मम नाम युवराज्ञी इति। भवती यथा उक्तवती, तथैव मां नेतुम् अर्हति। नेत्रयोः भागे अपि गोण्याः रन्ध्रं करोतु कृपया। यतः अहं मनुष्यान् द्रष्टुम् इच्छामि'' इति।

अनन्तरं शकुन्तला गोण्यां राक्षसीं पूरयित्वा गोण्याः रन्ध्रं कृत्वा गोणीं शकटे संस्थाप्य राजधानीं गतवती।

राजधान्याः विपण्यां तिस्रः अपि गोणीः स्थापयित्वा शकुन्तला उच्चैः वदति स्म - एकगोणीपरिमितायाः तिन्त्रिण्याः मूल्यं पञ्चाशत् रूप्यकाणि इति।

तावता कुतश्चित् मिष्टकस्य विक्रयणशब्दं श्रुत्वा वामना राक्षसी शकुन्तलाम् मन्दस्वरेण उक्तवती - "वत्से! कृपया किञ्चित् मिष्टकम् आनीय ददातु" इति।

पार्श्वे एव गुडस्य विक्रयणं कुर्वन्तं बालकम् उद्दिश्य शकुन्तला 'कञ्चन कालं यावत् मम तिन्त्रिणीगोणीः रक्षतु' इति उक्त्वा मिष्टकम् आनेतुं गतवती।



तावता मिष्टकविक्रयिकः बहुदूरं गतवान् आसीत्। तथापि शकुन्तला तं मिष्टकविक्रयिकम् अन्विष्य मिष्टकं क्रीत्वा अर्धघण्टानन्तरं प्रत्यागतवती। किन्तु शकटे गोण्यः न आसन्।

तावता गुडविक्रयिकः बालकः शकुन्तलायाः समीपम् आगत्य तस्यै सार्धशतं रूप्यकाणि यच्छन् उक्तवान् - "विना श्रमं भवत्याः तिन्त्रिण्याः विक्रयणम् अभवत्। राजभटाः आगत्य तिन्त्रिण्याः गोणीत्रयम् अपि क्रीत्वा गतवन्तः। श्वः एव राजकुमार्याः विवाहः खलु!" इति।

एतत् श्रुत्वा शकुन्तला भीता। 'मयि एव विश्वस्य आगतवती आसीत् वामना राक्षसी। तिन्त्रिणीगोण्यां राक्षसीं दृष्ट्वा राजभटाः तां दण्डयेयुः, अथवा सजीवम् अग्निना दहेयुः अपि' इति चिन्तयन्ती शकुन्तला ततः साक्षात् राजभवनं गतवती। तत्र केचन वस्तूनां गोणीः उन्नीय उद्यानस्य पार्श्वस्थां धर्मशालां गच्छन्तः आसन्। तत्र गता शकुन्तला अपि एकां गोणीं गृहीत्वा धर्मशालां प्रविष्टवती। धर्मशालायाः एकस्मिन् कोणे तिन्त्रिण्याः गोणीत्रयं दृष्टं शकुन्तलया।

सा तिन्त्रिणीगोणीसमीपं गत्वा मन्दस्वरेण 'युवराज्ञि' इति आहूतवती।

तदा राक्षसी शकुन्तलां पृष्टवती - "मिष्टकम् आनीतवती वा?" इति।

तदा शकुन्तला - "युवराज्ञि! आवाम् इदानीम् आपत्काले स्वः। आवाम् इदानीं



राजभवनस्य आवरणे स्वः । सायङ्काले अन्धकारः यदा आवृतः भवति, तदा अहम् इतः निर्गमनार्थं काञ्चित् व्यवस्थां कल्पयिष्यामि । अहम् आगत्य यावत् भवतीम् आह्वयामि, तावत्पर्यन्तं भवती गोण्याम् एव शववत् तिष्ठतु'' इति उक्त्वा गोण्याः बन्धनं निष्कास्य ततः गतवती ।

तावता सूर्यः अस्तं गतः । सर्वत्र अन्धकारः प्रसृतः । केन प्रकारेण राजभवनस्य आवरणात् बहिः गन्तव्यम् इति चिन्तयन्ती शकुन्तला राजभवनस्य उद्यानं गतवती । तत्र म्लानमुखी काचित् युवतिः शकुन्तलया दृष्टा । तस्याः युवत्याः वेषभूषादिना शकुन्तला ऊहितवती यत् - एषा राजकुमारी इति । शकुन्तला तां पृष्टवती - ''श्वः प्रातःकाले एव भवत्याः विवाहः । एवं सति अस्मिन् समये किमर्थम् अत्र उपविष्टवती अस्ति भवती ? एषः विवाहः भवत्या न अनुमतः वा ?'' इति ।

एतत् श्रुत्वा राजकुमारी आश्चर्येण पृष्टवती - ''भवती का ? अहम् एतं विवाहं न इच्छामि इति भवत्या कथं ज्ञातम् ?'' इति ।

तदा शकुन्तला मन्दहासपूर्वकम् उक्तवती - ''मासात्पूर्वं मम परिस्थितिः अपि एतादृशी एव आसीत् । ततः आत्मानं रक्षितुम् इच्छन्ती अहं गृहात् निर्गत्य कुत्रचित् गत्वा एवमेव उपविष्टवती आसम्'' इति ।

शकुन्तलायाः वचनं शृण्वती एव राजकुमारी अश्रुपूर्णा जाता । राजकुमारी शिल्पिनं कञ्चित् युवकं इष्टवती आसीत् । किन्तु एतं विषयं मातापितरौ वक्तुं धैर्यं न आसीत् तस्याः । इदानीं कस्यचित् राज्यस्य युवराजेन सह तस्याः विवाहः निश्चितः आसीत् । एतत्सर्वं राजकुमारी शकुन्तलां निवेदितवती ।

तदा शकुन्तला स्नेहपूर्वकं राजकुमारीम् उक्तवती - ''यदि एतं विषयं पितरौ वक्तुं भवत्याः भयं, तर्हि वरम् एव निवेदयतु'' इति ।

शकुन्तलायाः वचनं श्रुत्वा राजकुमारी स्वकीयम् अङ्गुलीयकं शकुन्तलायै यच्छन्ती उक्तवती - ''एतत् अङ्गुलीयकं धृत्वा भवती राजभवने यत्र कुत्रापि गन्तुम् अर्हति । सिंहपुरस्य युवराजं राजसिंहं कथमपि अत्र

आनयतु भवती'' इति।

तदा शकुन्तला क्षणकालं विचिन्त्य - ''यदि भवती अत्रैव उपविश्य चिन्तां करोति, तर्हि अन्ये भवतीं दृष्ट्वा अन्यथा चिन्तयेयुः । अतः भवती वस्तुभिः पूर्णां धर्मशालां गत्वा कुत्रापि रहस्येन तिष्ठतु। अहं युवराजं धर्मशालां प्रति प्रेषयिष्यामि'' इति उक्त्वा ततः प्रस्थाय सिंहपुरस्य युवराजस्य वासस्थानं गतवती।

तत्र सा युवराजाय राजकुमार्याः अङ्गुलीयकं प्रदर्श्य - ''भवता सह त्वरितं किमपि सम्भाषणं कर्तुम् इच्छन्ती राजकुमारी मद्द्वारा वार्तां प्रेषितवती यत् - भवान् मया आनेतव्यः इति । अतः इदानीं भवान् मया सह आगच्छतु'' इति उक्त्वा युवराजं धर्मशालां नीतवती । धर्मशालायाः अन्तः तं सम्प्रेष्य सा बहिः एव स्थितवती।

युवराजः धर्मशालायाः अन्तः गत्वा क्षणकालाभ्यन्तरे एव बहिः आगतवान् । तस्य मुखं कोपेन रक्तवर्णतां गतम् आसीत्। सः शकुन्तलायाः समीपम् आगत्य तां पृष्टवान् - ''भवत्याः नाम किम् ?'' इति।

भयम् अनुभवन्ती एव शकुन्तला उक्तवती - ''शकुन्तला'' इति।

तदा युवराजः उक्तवान् - ''शकुन्तले ! अहं भवतीम् इष्टवान् अस्मि । अस्मिन् एव मुहूर्ते अहं भवतीं परिणेतुम् इच्छामि। यतः सौन्दर्येण भवती देवलोकात् आगता गन्धर्वकन्या इव अस्ति'' इति।

युवराजस्य राजसिंहस्य वचनं श्रुत्वा



आश्चर्यचकिता शकुन्तला उक्तवती - ''अहं सामान्या काचित् युवतिः । भवान् तु युवराजः अस्ति। अतः अहं भवतः अनुरूपा सर्वथा न'' इति।

''मया पृष्टे सत्यपि भवती सुलभतया न अङ्गीकरोति इति यत्, तेन एव ज्ञायते - भवत्याः संस्कृतियुतः व्यवहारः, विनयशीलता च । अहं तु निश्चितवान् अस्मि - भवती एव परिणेतव्या इति'' इति उक्तवान् युवराजः।

क्षणाभ्यन्तरे एव एषा वार्ता राजभवनस्य अन्तःपुरे प्रसृता । स्वपुत्री मातापित्रोः समीपम् अपि स्वविवाहविषये मुक्तं सम्भाषणं न कृतवती इति कारणतः राजदम्पती खेदम् अनुभूतवन्तौ। अनन्तरं तौ

पूर्वं निश्चिते मुहूर्ते एव शिल्पिना सह पुत्र्याः राजकुमार्याः विवाहं, शकुन्तला-राजसिंहयोः विवाहं च निर्वर्तितवन्तौ।

अनन्तरं राजा शकुन्तलाम् उक्तवान् - ''मम पुत्र्याः दुःखं निवारितवती भवती असामान्या एव। अतः, भवती यत् इच्छति, तत् पृच्छतु। ददामि'' इति।

तदा शकुन्तला उक्तवती - ''महाराज! विशेषतः मम कापि अपेक्षा नास्ति। धर्मशालायां विद्यमानासु गोणीषु यां गोणीम् अहम् इच्छामि, तां ददातु कृपया'' इति।

शकुन्तलायाः विचित्राम् अपेक्षां श्रुत्वा सर्वे अपि आश्चर्यचकिताः। 'भवती यां गोणीम् इच्छति, तां नयतु' इति उक्तवान् राजा।

प्रयाणसमये राक्षसीयुतां गोणीं स्वरथे स्थापितवती शकुन्तला। सा मध्येमार्गं राक्षस्याः वासस्थानं गत्वा रथं स्थगितवती, राक्षसीम् उक्तवती च - ''युवराज्ञि! गोणीतः बहिः आगच्छतु भवती'' इति।

अपरक्षणे एव राक्षसी गोणीतः बहिः आगतवती। एतत् दृष्ट्वा आश्चर्यचकितः राजसिंहः पृष्टवान् - ''भवत्याः नाम युवराज्ञी इति वा?'' इति।

राक्षसी अङ्गीकारपूर्वकं शिरः चालयन्ती उत्प्लुत्य वटवृक्षस्य शाखाम् आरूढवती।

पूर्वदिनरात्रौ युवराजः राजसिंहः शकुन्तलायाः वचनानुसारं राजकुमार्या सह वार्तालापार्थं यदा गतवान् आसीत्, तदा तेन 'युवराज्ञि' इति आहूतम् आसीत्। तस्मिन् समये वामना राक्षसी गोणीतः बहिः आगतवती आसीत्। राक्षसीं दृष्ट्वा युवराजः 'रात्रिसमये राजकुमारी राक्षसीरूपेण परिणमति। अतः एषा मायाविनी एव' इति चिन्तयन् तदा एव निर्णीतवान् आसीत् 'शकुन्तला एव परिणेतव्या' इति।

एवं प्रवृत्तं सर्वं राजसिंहः शकुन्तलाम् उक्त्वा मन्दहासपूर्वकम् उक्तवान् - ''एतस्याः वामनायाः राक्षस्याः कारणतः एव आवयोः विवाहः सम्पन्नः। अतः एषा राक्षसी आगामिजन्मनि अवश्यं राजवंशे एव जन्म प्राप्स्यति'' इति।





# भुवनसुन्दरी - ३

(ट्रायनगरे प्रचलितं स्मारकोत्सवं प्रति गतः मोहनः सर्वासु अपि स्पर्धासु भागं गृहीत्वा जयं प्राप्तवान् । तत्र वर्धनेन ज्ञातं यत् मोहनः स्वपुत्रः एव इति । भुवनसुन्दर्याः प्राप्त्यर्थं प्रतिदिनम् अपि मोहनः देवतां कामिनी पूजयति स्म । अनन्तरं सः स्पार्टानगरं गत्वा भुवनसुन्दर्याः पतिः प्रतापः यदा गृहे न आसीत्, तदा भुवनसुन्दरीं स्वनौकाद्वारा ट्रायनगरम् आनीय, तां परिणीतवान् । भुवनसुन्दर्याः प्रतिप्राप्त्यर्थं ग्रीक्जनैः कृतः शान्तिसन्धिः विफलः जातः । अनन्तरम् ...)

भुवनसुन्दर्याः प्रतिप्राप्त्यर्थं कृतः शान्तिसन्धिः विफलः जातः इति कारणतः प्रतापः सर्वेभ्यः ग्रीक्-राजकुमारेभ्यः वार्ता प्रेषितवान् यत् - मम भुवनसुन्दर्याः च विवाहसमये भवद्भिः कृतायाः प्रतिज्ञायाः अनुसारं भवद्भिः सर्वैः अपि इदानीं मम साहाय्यार्थम् आगन्तव्यम् इति । प्रतापः यद्यपि सर्वेभ्यः वार्ता प्रेषितवान्, तथापि सः ग्रीक्देशस्य सर्वाणि राज्यानि स्वयं गत्वा तत्तद्राज्यस्य महाराजं सविनयं प्रार्थितवान् - 'ट्रायनगरस्य उपरि आक्रमणार्थं मत्पक्षीयत्वेन भवान् ससैन्यं युद्धार्थं सन्नद्धः भवतु' इति ।

इथाकाराजं रूपधरं द्रष्टुं प्रतापः अग्रजेन सह गतवान् । किन्तु तावता एव रूपधरः निर्णीतवान् आसीत् - 'अस्मिन् युद्धे भागः न



ग्रहीतव्यः' इति । यतः 'यदि भवान् ट्रायनगरं गमिष्यति, तर्हि ततः प्रत्यागमन-समये महत् कष्टम् अनुभविष्यति । विंशतिं वर्षाणि यावत् स्वगृहं न प्राप्स्यति च' इति अशरीरवाण्या उक्तम् आसीत् ।

एतस्याः अशरीरवाणीतः भीतः रूपधरः युद्धे भागं ग्रहीतुम् अनिच्छन् कश्चित् उपायं चिन्तितवान् ।

प्रतापः अग्रजेन सह यदा रूपधरं द्रष्टुं गतवान्, तदा सः कृषिकः इव शिरसि उष्णीषं धृत्वा हलेन भूमिं कर्षन् आसीत् । हलस्य एकस्मिन् पार्श्वे वृषभम् अपरस्मिन् पार्श्वे गर्दभं च बद्धवान् आसीत् । कर्षणसमये मध्ये मध्ये लवणं भूमौ विकिरति स्म । पार्श्वे एव तस्य पत्नी पद्ममुखी शिशुं धीरमतिम् उन्नीय स्थितवती आसीत् ।

रूपधरः उन्मत्तः इव व्यवहरति स्म । तत्र आगतं प्रतापं, तस्य अग्रजं चक्रवर्तिनं च न अभिज्ञातवान् सः । किन्तु प्रतापः तस्य अग्रजः च वस्तुस्थितिं ज्ञातवन्तौ । तौ पद्ममुख्याः हस्ते स्थितं शिशुं आकृष्य कर्षतः हलस्य पुरतः भूमौ स्थापितवन्तौ । अनुक्षणं रूपधरः रज्जुम् आकृष्य कर्षणं स्थगितवान् । तेन स्पष्टं जातं यत् - रूपधरः न उन्मत्तः इति । अतः युद्धे रूपधरस्य भागग्रहणम् अनिवार्यम् अभवत् ।

ट्रायनगरं विरुध्य प्रचलिष्यमाणे युद्धे भागं ग्रहीतुम् केषाञ्चन राजकुमाराणाम् इच्छा न आसीत् । तथापि प्रतापस्य आग्रहेण ते सर्वे युद्धार्थम् आगन्तुम् अङ्गीकृतवन्तः आसन् ।

कश्चित् राजकुमारः 'युद्धार्थं पञ्चाशत् नौकाः प्रेष्यन्ते मया' इति प्रतापाय वचनं दत्तवान् आसीत् । किन्तु सः एकाम् एव नौकां प्रेषितवान् । अवशिष्टाः नवचत्वारिंशत् नौकाः अपि तस्याम् एव नौकायाम् आसन् । किन्तु ताः बालैः क्रीडार्थम् उपयुज्यमानाः मृन्मय्यः नौकाः आसन् ।

ग्रीकज्योतिषिकः कश्चित् उक्तवान् आसीत् - वज्रकायनामकस्य युवकस्य साहाय्यं विना ट्रायनगरस्य उपरि आक्रमणम् अशक्यम् इति । वज्रकायः तटिनी-नामिकायाः स्त्रियः सप्तमः पुत्रः । स्वपुत्रः प्रपञ्चे एव महान् योधः भवेत् इति आशया तटिनी पुत्रस्य पादौ गृहीत्वा स्पिक्सनद्यां तं

मज्जितवती आसीत् तस्य बाल्ये। एतस्मात् कारणात् तदीयं शरीरं वज्रमयं जातम् आसीत्। मात्रा गृहीतौ पादौ यथापूर्वम् एव अवशिष्टौ, न तु वज्रसदृशौ जातौ। वज्रकायः बाल्यकाले एव धावनम्, मृगया, गीतगानम्, धैर्यसाहसादीनि इत्यादिषु प्रसिद्धिं प्राप्तवान् आसीत्। सः षष्ठे वयसि एव वन्यसूकरं मारितवान्।

युद्धार्थं साहाय्यं प्रार्थयितुं रूपधरः भूदेवः नवद्योतः च वज्रकायसमीपं गतवन्तः। 'यदि पुत्रः वज्रकायः ट्रायनगरं प्रति युद्धार्थं गच्छति, तर्हि तस्य मरणं निश्चितम् एव' इति वज्रकायस्य माता तटिनी जानाति। अतः युद्धतः तं रक्षितुम् इच्छन्ती तटिनी वज्रकायेन स्त्रीवेषं धारयित्वा तं कस्यचित् महाराजस्य अन्तःपुरे स्थापितवती।



वज्रकायं द्रष्टुम् आगताः रूपधरप्रभृतयः राजभवने स्थितान् सर्वान् पुरुषान् परिशीलितवन्तः। तेषु वज्रकायः न आसीत्। वज्रकायः स्त्रीवेषधारी सन् तत्रैव कुत्रापि रहस्येन स्थितवान् अस्ति इति सन्देहः उत्पन्नः रूपधरस्य। वज्रकायस्य बहिः आनयनार्थं रूपधरः कश्चित् उपायं चिन्तितवान्। सः अन्तःपुरस्य स्त्रीणां निमित्तं बहूनि पारितोषिकाणि आनायितवान्। तेषु महिलाभिः उपयुज्यमानानि वस्त्राणि, अलङ्कारसाधनानि, आभरणानि च आसन्। तैः सह खेटकः अन्यानि आयुधानि च आसन्। तानि वस्तूनि एकत्र संस्थाप्य अन्तःपुरस्य महिलाभ्यः रूपधरः वार्तां प्रेषितवान् यत् - सर्वाः अपि आगत्य आत्मना इष्टं वस्तु स्वीकर्तुम् अर्हन्ति इति। तदनुसारं स्त्रियः आगत्य वस्तूनि स्वीकृतवत्यः। तस्मिन् एव समये राजभवनात् बहिः रूपधरस्य आदेशानुसारं भेरीनिनादः कृतः। एतत् श्रुत्वा स्त्रीवेषधारी वज्रकायः स्वकीयं स्त्रीवेषं विस्मृत्य तत्र स्थितं खेटकादीनि आयुधानि स्वीकृतवान्। एतत् दृष्ट्वा सः एव वज्रकायः इति अभिज्ञातवान् रूपधरः। रूपधरस्य आशयानुसारं वज्रकायः युद्धार्थम् आगमनम् अङ्गीकृतवान्।

ग्रीक्‌जनानां नौकाः औलिस्‌समीपे सिद्धाः आसन्। तस्मिन् समये तत्र आगताः क्रीट्‌दूताः उक्तवन्तः – ''चक्रवर्ती इव ममापि

सेनाधिपत्यं दीयते चेत् शतनौकाभिः सह अहम् आगत्य युद्धे भागं गृह्णामि इति अस्माकं राजा प्रभवः उक्तवान् अस्ति'' इति।

प्रभवः पूर्वं भुवनसुन्दर्याः स्वयंवरार्थम् आगतेषु राजकुमारेषु अन्यतमः। सः सुन्दरः इति ख्यातः आसीत्। ग्रीक्जनाः प्रभवस्य आशयम् अङ्गीकृतवन्तः। अनन्तरं प्रभवः शतनौकाभिः सह युद्धार्थम् आगतवान्।

ट्रायनगरस्य उपरि आक्रमणार्थं सर्वम् अपि सिद्धम् अभवत्। सर्वस्य अपि सैन्यस्य प्रमुखसेनाधिपतिः चक्रवर्ती आसीत्। रूपधरः प्रबोधः देवमयः च उपसेनाधिपतित्वेन स्थितवन्तः। नौकानां प्रमुखत्वेन वज्रकायः चितः। वज्रकायस्य साहाय्यकत्वेन भूदेवः रक्तवर्णः च स्थितवन्तौ। पीलसराजः नवद्योतः योधेषु एव वृद्धतमः आसीत्। परम्परात्रयतः अपि राज्यं पालयन् सः वृद्धः स्ववार्धक्ये अपि युद्धभूमौ प्रचण्डः एव आसीत्। चक्रवर्तिनः अनुज्ञां विना किमपि कार्यं न करोति स्म नवद्योतः। युद्धसम्बन्धिनी या कापि समस्या भवतु, तस्याः परिहारार्थं क्रियमाणं चिन्तनं तु रूपधरस्य नवद्योतस्य च समानं भवति स्म।

महायोधनाम्ना प्रख्यातेषु वीरेषु भूदेवः अपि अन्यतमः। धैर्ये, शक्तिप्रदर्शने, साहसे, रूपे च वज्रकायस्य प्रथमं स्थानं चेत् भूदेवस्य द्वितीयं स्थानम् आसीत्। सः देवताः अपि न परिगणयति स्म। युद्धार्थं प्रस्थानसमये ज्येष्ठाः तम् उद्दिश्य - ''वत्स! भवान् युद्धरङ्गे पराक्रमं प्रदर्श्य देवतानां साहाय्येन जयं



प्राप्नोतु'' इति आशिषा अनुगृह्णन्ति स्म । किन्तु तदा भूदेवः तिरस्कारपूर्वकं वदति स्म - ''देवतानां साहाय्येन चेत् भीरवः अपि जयं प्राप्स्यन्ति । अहं तु देवतानां साहाय्यं विना एव जयं प्राप्स्यामि'' इति ।

'उपभूदेवः' इति कश्चित् आसीत् । सः आयुधानां ग्रहणे, क्षेपणे च प्रसिद्धिं प्राप्तवान् आसीत् । धावने अपि सः अतीव चतुरः आसीत् । धावने भूदेवस्य प्रतिस्पर्धी वज्रकायः केवलं भवितुम् अर्हति स्म ।

पूर्वं देवमयः भुवनसुन्दरीम् इष्टवान् आसीत् । मोहनेन भुवनसुन्दरी अपहृत्य नीता इति कारणतः मोहनविषये देवमयस्य वैयक्तिकद्वेषः आसीत् एव । अतः सः मोहनविषयिकया द्वेषभावनया युद्धार्थम् आगतवान् आसीत् ।

डिलोस्राजः देवदासः ग्रीक्सैनिकानां कृते अत्यावश्यकानि वस्तूनि, धान्यानि पाकवस्तूनि च सङ्गृहीतवान् । युद्धार्थं नौकानां प्रस्थानात्पूर्वं प्रतापस्य अग्रजः चक्रवर्ती देवतानां तर्पणार्थं पूजादिकं कृतवान् । कांशुकनामकः ज्योतिषिकः नौकानां मार्गदर्शकत्वेन नियुक्तः अभवत् ।

वस्तुतः कांशुकः ट्रायनगरं प्रति गन्तुं समुद्रमार्गं न जानाति स्म । अतः ग्रीक्जनानां नौकाः उत्तममार्गदर्शनं विना एव समुद्रमार्गेण प्रस्थिताः । तस्मात् नौकाः ट्रायनगरं न प्राप्तवत्यः, अपि तु दक्षिणे स्थितं मीनियातीरं प्राप्तवत्यः । 'ट्रायनगरम् एव प्राप्तम् अस्माभिः' इति मत्वा ग्रीक्सैनिकाः नौकातः अवतीर्य तं प्रदेशं लुण्ठितवन्तः । एतां वार्तां ज्ञात्वा मीनियाराजः ग्रीक्जनानां





सम्मुखीकरणार्थं स्वसैन्यं प्रेषितवान् । तत्र प्रवृत्ते युद्धे केचन ग्रीक्सैनिकाः हताः अभवन् । तावता वज्रकायः तत्र गत्वा मीनियासैनिकान् पराजितान् कृतवान् । यदि वज्रकायः तस्मिन् समये तत्र उपस्थितः न स्यात्, तर्हि ग्रीक्सैनिकानां सर्वेषाम् अपि नाशः अभविष्यत् ।

एतावता ग्रीक्सैनिकैः ज्ञातं यत् - तत् ट्रायनगरं न इति । अतः ते पुनः स्वनौकाः आरुह्य प्रस्थितवन्तः । किन्तु समुद्रे उत्पन्नस्य चण्डमारुतस्य कारणात् सर्वाः अपि नौकाः इतस्ततः विकीर्णाः अभवन् । अनन्तरं ताः नौकाः पुनः एकत्र न मिलिताः एव । सर्वेऽपि ग्रीक्राजाः स्वनौकया सह स्वस्वराज्यं प्रति गतवन्तः । ट्रायनगरस्य उपरि ग्रीक्जनैः कृतं प्रथमम् आक्रमणम् एवंरीत्या विफलम् अभवत् ।

पुनः एकवर्षानन्तरं ग्रीक्जनाः ट्रायनगरस्य उपरि युद्धार्थं सर्वाः सिद्धताः कृतवन्तः । किन्तु बहुकालं यावत् प्रयाणार्थम् अनुकूलकरः वायुः न आसीत् एव । तदर्थं ग्रीक्जनैः देवतानां पूजा कृता । अनन्तरदिनेषु वायुः अनुकूलकरः जातः प्रयाणार्थम् । ट्रायनगरम् उद्दिश्य नौकाः प्रस्थिताः । सुदीर्घस्य प्रयाणस्य अनन्तरं नौकाः प्रथमतया लेस्पान्द्वीपस्य तीरप्रदेशं प्राप्तवत्यः । लेस्पान्द्वीपस्य राजा ग्रीक्जनान् स्वागतीकृत्य तेषाम् आतिथ्यं कृतवान् । किन्तु सः ग्रीक्जनान् आत्मना सह मल्लयुद्धार्थम् आहूतवान् । लेस्पान्राजः मल्लयुद्धे निपुणः आसीत् । ग्रीक्सैनिकानां प्रतिनिधीभूय रूपधरः लेस्पान्राजेन सह मल्लयुद्धार्थम् सिद्धः अभवत् ।

मल्लयुद्धम् आरब्धम् । लेस्पान्राजः पराजितः अभवत् । एतस्मात् ग्रीक्सैनिकाः अतीव सन्तुष्टाः । अनन्तरदिने ग्रीक्नौकाः लेस्पान्तः प्रस्थाय केषुचित् एव दिनेषु टेनेडोसद्वीपस्य तीरप्रदेशं प्राप्तवत्यः ।

टेनेडोसद्वीपतः ट्रायनगरं विंशति-किलोमीटर्-दूरे आसीत् । ट्रायनगरस्य दुर्गभित्तेः उपरि स्थितं चेत् टेनेडोसद्वीपः दृश्यते स्म । सैनिकान् सर्वान् अपि टेनेडोसद्वीपे एव परित्यज्य रूपधरः, प्रतापः, प्रबोधः च शान्तिसन्ध्यर्थं ट्रायनगरं गतवन्तः । 'विना विवादं भुवनसुन्दरीं

प्रत्यर्पयन्तु' इति कथनम् एव प्रतापादीनाम् उद्देशः आसीत्। किन्तु ट्रायूजनाः पूर्वम् एव निर्णीतवन्तः आसन् यत् - भुवनसुन्दर्याः प्रत्यर्पणं नास्ति एव इति।

एतस्मात् प्रतापादिभिः कृतः शान्तिसन्धिः विफलः जातः। अपि च तेषां हननार्थम् अपि यत्नः कृतः ट्रायूजनैः। किन्तु यस्मिन् गृहे प्रतापादीनां वसतिव्यवस्था कल्पिता आसीत्, तद्गृहस्य स्वामी प्रतापादीनां हननार्थं प्रयत्नं कृतवतः ट्रायूजनान् उक्तवान् - "दूताः कदापि न मारणीयाः। एतत् अत्यन्तं नीचकार्यम्। एतादृशं भवताम् अकार्यम् अहं सर्वथा न अङ्गीकरोमि" इति।

शान्तिसन्धिः विफलः जातः इत्यतः ग्रीक्सैनिकानां नौकाः टेनेडोस्द्वीपतः प्रस्थाय ट्रायूनगरस्य तीरसमीपम् आगताः। ग्रीक्सैनिकानां नौकाः आगताः इति ज्ञात्वा ट्रायूजनाः सर्वे अपि स्वनगरात् प्रस्थाय समुद्रतीरम् आगतवन्तः। ग्रीक्नौकानाम् उपरि शिलाखण्डान् क्षिपन्तः तेषां प्रतिप्रेषणार्थं यत्नं कृतवन्तः। किन्तु तावता नौकाः तीरं प्राप्तवत्यः एव।

इदानीं ग्रीक्जनानां काचन समस्या उत्पन्ना - ट्रायूनगरस्य भूमौ प्रथमं केन पादः स्थापनीयः इति। यतः ज्योतिषिकेण उक्तम् आसीत् - ट्रायूभूमौ यः योधः प्रथमं पादं स्थापयति, सः युद्धस्य आरम्भे एव मरणं प्राप्नोति इति। अतः ग्रीक्सैनिकेषु प्रथमम् नौकातः अधः अवतर्तुं कोऽपि सिद्धः न आसीत्। बलवान् वज्रकायः अपि प्रथमतया नौकातः अवतरणं न इष्टवान्।

किन्तु धीरः चन्द्रप्रभः नौकातः प्रथमम् अधः अवतीर्य युद्धं कुर्वन् बहून् शत्रून् मारितवान्। ट्रायूनगरस्य वीरसिंहः चन्द्रप्रभं मारितवान्। चन्द्रप्रभस्य अनन्तरं वज्रकायः नौकातः अवतीर्णः। तेन सह एव सर्वे अपि सैनिकाः अवतीर्णाः। वज्रकायः कांश्चन ट्रायूवीरान् मारितवान्। तावता अन्ये सर्वे भीत्या नगरं प्रति पलायनं कृतवन्तः।

एतत् दृष्ट्वा ग्रीक्सैनिकाः सर्वे अपि महता सन्तोषेण नृत्यं कृतवन्तः। (अनुवर्तते)



## नारिकेलत्वङ्निष्कासनसामर्थ्यम्

नारिकेलस्य त्वचः निष्कासनार्थं सामान्यतः लवित्रादीनि आयुधानि उपयुज्यन्ते । आयुधम् उपयुज्य नारिकेलं परितः दीर्घं रेखाकारं कृत्वा त्वचः निष्कासनं नाम कष्टसाध्यम् एव कार्यम् । किन्तु किमपि आयुधं विना स्वदन्तैः एव नारिकेलत्वचं विंशतिसेकेण्ड्स्-अभ्यन्तरे एव निष्कासयति केरलस्य कल्लिकोटेप्रदेशस्थः जोस्वर्यः ।



३२ वर्षीयः जोस् 'अड्वर्टैस्मेण्ट्' चित्रग्राहकः अस्ति । सः स्वपराक्रमं पुरस्कृत्य स्वनाम 'गिन्निस् बुक् आफ् रेकार्ड्' मध्ये योजनीयम् इति तत्प्रकाशकाय पत्रं लिखितवान् अस्ति ।

## आधुनिकी कामधेनुः

हरिद्वारस्थे कस्मिंश्चित् आश्रमे श्यामानामिका धेनुः अस्ति । तत्रत्याः जनाः तां 'कामधेनु' नाम्ना आह्वयन्ति । यतः सा धेनुः गतेभ्यः अष्टवर्षेभ्यः क्षीरं ददती अस्ति । १९८० तमे वर्षे श्यामा प्रथमवारं प्रसूतवती । तदा सा प्रतिदिनं ३५ तः ४० लीटर्परिमितं क्षीरं ददाति स्म । श्यामा १९८२ तमे वर्षे, १९८४ तमे वर्षे च प्रसूतवती । अनन्तरं सा पुनः गर्भं न धृतवती । किन्तु सा क्षीरं तु ददती एव अस्ति । श्यामा इदानीं सप्तदशवर्षीया अस्ति । किन्तु वार्धक्यस्य चिह्नम् अपि न दृश्यते तस्याम् । इदानी सा प्रतिदिनं ६ तः १५ लीटर्परिमितं क्षीरं ददाति । श्यामायाः प्रथमः वत्सः इदानीं त्रयोदशवर्षीयः । वृद्धस्य तस्य दन्ताः पतिताः सन्ति ।



## दीर्घतमं कार्यानम्

प्रपञ्चे एव दीर्घतमं कार्यानं लण्डन्देशस्य 'राक् म्यूसियम्' मध्ये अस्ति । '१९८२ - क्याडिलाक्' नामकस्य एतस्य कार्यानस्य दैर्घ्यं २२ मीटर् । पञ्चाट्टसहितस्य भवनस्य सदृशम् औन्नत्यम् एतस्य । एतस्य यानस्य भारः ७ टन् । सामान्यमार्गे एतस्य उपयोगः यदि क्रियते, तर्हि ट्राफिक्क्लेशः भवेत् इति स्यात्, एतत् एतेषु दिनेषु उपयुज्यमानं नास्ति । इदानीं 'म्यूसियं' मध्ये अपि स्थलाभावकारणतः तस्य विक्रयणं करणीयम् इति चिन्तयन्तः सन्ति वस्तुसङ्ग्रहालयस्य अधिकारिणः ।



# विवेकी विवेकः

'कर्तव्यं तु मम, फलं दैवाधीनम्' इति चिन्तयन् त्रिविक्रमः पुनरपि वृक्षसमीपं गतवान्, वृक्षस्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः उक्तवान् - "अये राजन् ! भवान् यद्यपि सर्वेषु अपि यत्नेषु पराजयं प्राप्नुवन् अस्ति, तथापि कार्ये सिद्धिः प्राप्तव्या एव इति भवतः यः दृढसङ्कल्पः अस्ति, सः अभिनन्दनीयः एव । किन्तु कार्यसिद्ध्यनन्तरं भवतः व्यवहारः विवेकरहितः भवेत् वा इति मम सन्देहः । एतस्य उदाहरणार्थं विवेकनामकस्य युवकस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्" इति ।

अनन्तरं वेतालेन कथा आरब्धा -

प्रतापपुरस्थः विवेकः गुणपालस्य पुत्रः । विवेकः सद्गुणवान् । पितुः विषये महती प्रीतिः, महान् आदरः च विवेकस्य ।

## वेतालकथा



पञ्चाशत्तमे वयसि गुणपालः उरसः वेदनया पीडितः अभवत् । तदा वैद्यः गुणपालं परीक्ष्य उक्तवान् - ''भवतः विश्रान्तेः आवश्यकता अस्ति । अतः सर्वदायित्वम् अपि पुत्राय दत्त्वा भवान् निश्चिन्तः सन् विश्रान्तिं स्वीकरोतु'' इति ।

वैद्यस्य सूचनानुसारं विवेकः गृहस्य दायित्वं स्वीकृतवान् ।

सप्ताहद्वयम् अतीतम् । कदाचित् सुदूरस्थात् ग्रामात् श्रीकण्ठनामकः कश्चित् आगत्य विवेकं दृष्ट्वा उक्तवान् - ''अहं भवतः ज्येष्ठपितृव्यस्य पुत्रः अस्मि । भवतः पिता मम पितरं वञ्चयित्वा अस्माकं भूमिं स्वायत्तीकृतवान् । अतः अस्माकं कुटुम्बस्य सर्वनाशः जातः । इदानीं मम रक्षणं भवतः दायित्वम्'' इति ।

एतत् श्रुत्वा विवेकः आश्चर्येण - ''मम पिता परोपकारविषये अग्रगण्यः । मम पिता भवतः पितरं वञ्चितवान् इति वचने सर्वथा न विश्वसिमि अहम्'' इति ।

''सत्यं वा असत्यं वा इति भवतः पितरम् एव पृच्छाव'' इति उक्तवान् श्रीकण्ठः धैर्येण ।

तदा विवेकः - ''इदानीं मम पितुः आरोग्यं सम्यक् नास्ति । सः उरसः वेदनया पीडितः अस्ति । अतः एतद्विषये तस्य समीपे चर्चा मास्तु । भवता यत् उक्तं, तस्मिन् विषये मम पितुः सहोदरान् विचार्य, तेषाम् अभिप्रायं लेखयित्वा आनेष्यामि अहम् । तदा वस्तुस्थितिः का इति ज्ञायते । तावत्पर्यन्तम् अपि भवान् मम पितरं मा पश्यतु'' इति उक्त्वा विवेकः प्रयाणार्थं प्रस्थितवान् ।

श्रीकण्ठः वस्तुतः महादुष्टः । पुत्रस्य तस्य स्वभावात् कुपितः तदीयः पिता एव तं गृहात् निष्कासितवान् आसीत् ।

विवेकः श्रीकण्ठस्य गृहं गत्वा प्रवृत्तं सर्वं श्रीकण्ठस्य पितरं निवेदितवान् । तत् श्रुत्वा श्रीकण्ठस्य पिता अतीव खिन्नः । सः 'अनुजस्य गुणपालस्य विषये श्रीकण्ठेन उक्तं सर्वम् अपि असत्यम्, गुणपालः वस्तुतः सज्जनः' इति स्वाभिप्रायं लिखित्वा विवेकाय दत्तवान् ।

गुणपालस्य अपरौ उभौ सहोदरौ अपि श्रीकण्ठस्य पितुः अभिप्रायम् एव पुरस्कृतवन्तौ । तैः लिखितानि अभिप्राय-

पत्राणि स्वीकृत्य विवेकः सन्तोषेण प्रतापपुरं प्रत्यागतवान् । तावता तत्र महान् अनर्थः जातः आसीत् ।

पितुः सहोदराणाम् अभिप्रायं ज्ञातुं विवेकः यदा प्रस्थितवान्, तदनन्तरं श्रीकण्ठः गुणपालं दृष्ट्वा तद्विषये आरोपं कृतवान् । एतस्मात् अस्वस्थः गुणपालः कोपेन उद्विग्नः अभवत् । तस्मात् उरसः वेदना पुनरपि अधिका जाता । केषुचित् एव क्षणेषु गुणपालः प्राणान् त्यक्तवान् ।

'मम व्यवहारकारणतः पितृव्यः गुणपालः मृतः' इति कारणतः श्रीकण्ठः चिन्तितवान् यत् - विवेकसमीपे क्षमा प्रार्थनीया इति । किन्तु प्रतापपुरं प्रत्यागतः विवेकः प्रवृत्तं सर्वं ज्ञात्वा महता क्रोधेन - "पुनः भवतः मुखं मा दर्शयतु । प्रथमं निर्गच्छतु इतः" इति उक्त्वा तं गृहात् निष्कासितवान् ।

पिता दिवङ्गतः इति विवेकः अतीव दुःखितः । महत् दुःखम् अनुभवन् सः वर्षानन्तरं कथमपि समाधानं प्राप्तवान् ।

एकस्य वर्षस्य अनन्तरं मातुः आग्रहात् विवेकः स्वविवाहम् अङ्गीकृतवान् । वधूदर्शनार्थं विवेकः मात्रा सह कञ्चित् ग्रामं गतवान् । वधूपक्षीयाः विवेकम् इष्टवन्तः । वधूदर्शनानन्तरं वध्वाः पिता विवेकम् उक्तवान् - "वत्स ! विवेक ! भवतः विषये बहुधा प्रशंसां कृतवान् अस्ति भवतः पितृव्यपुत्रः श्रीकण्ठः । श्रीकण्ठाय मम पुत्री दातव्या इति मया यत्नः कृतः आसीत् । तदा



सः एव माम् उक्तवान् - 'भवतः पुत्र्याः योग्यः वरः न अहम् । प्रतापपुरस्थः विवेकः गुणवान्, बुद्धिमान् च । तादृशेन सह भवतः पुत्र्याः विवाहं निर्वर्तयतु' इति" इति ।

एतत् श्रुत्वा श्रीकण्ठस्य स्वभावे परिवर्तनं जातम् अस्ति इदानीम् इति विवेकस्य माता अतीव सन्तुष्टा । किन्तु विवेकः निर्दाक्षिण्यं दृढस्वरेण उक्तवान् - "श्रीकण्ठः मम शत्रुः । सः एतं विवाहप्रस्तावं कृतवान् इत्यतः अत्र किमपि कुतन्त्रम् अस्ति इति चिन्तयामि अहम् । अतः एषः सम्बन्धः मास्तु" इति ।

अनन्तरदिनेषु अन्यया कयाचित् वध्वा सह विवेकस्य विवाहः निश्चितः अभवत् । विवाहः सवैभवं सम्पन्नः । किन्तु विवाहार्थं श्रीकण्ठः न आहूतः ।



कानिचन दिनानि अतीतानि । श्रीकण्ठस्य विवाहः निश्चितः । श्रीकण्ठः विवेकस्य गृहम् आगत्य तं विवाहार्थम् आहूतवान् । किन्तु विवेकः श्रीकण्ठस्य विवाहार्थं न गतवान् ।

एकं वर्षम् अतीतम् । स्वस्य भूमेः पार्श्वे एव विद्यमाना दश-एकर्परिमिता भूमिः विक्रयणार्थम् अस्ति इति विवेकेन ज्ञातम् । किञ्चित् न्यूनमूल्येन एव सा भूमिः प्राप्तुं शक्या इति चिन्तयन् विवेकः निर्णीतवान् यत् - दश-एकर्परिमितां तां भूमिम् अहम् एव क्रेष्यामि इति । किन्तु तस्याः भूमेः क्रयणार्थं पर्याप्तमात्रं धनं न आसीत् विवेकस्य समीपे । इतोऽपि सहस्रं रूप्यकाणि आवश्यकानि आसन् । इदानीं ऋणकरणं विना नान्या गतिः इति यावत् चिन्तयन् आसीत् विवेकः, तेषु दिनेषु एव रङ्गनाथनामकः कश्चित् वणिक् नगरात् आगत्य विवेकतः द्विगुणितमूल्येन धान्यं क्रेतुम् इष्टवान् । यतः विवेकेन यादृशं धान्यं वर्ध्यते स्म, तादृशधान्यस्य प्रचारः महान् आसीत् तेषु दिनेषु ।

एतां वार्तां श्रुत्वा अतीव सन्तुष्टः विवेकः धान्यस्य विक्रयणं कृत्वा तेन धनेन एव भूमिः क्रेतुं शक्या इति चिन्तितवान् । अनन्तरं सः रङ्गनाथं पृष्टवान् - "अस्मिन् प्रदेशे उत्तमजातेः धान्यस्य वर्धनं मया केवलं क्रियमाणम् अस्ति इति कथं ज्ञातवान् भवान् ?" इति ।

तदा रङ्गनाथः उक्तवान् - "भवतः ज्येष्ठपितृव्यस्य पुत्रस्य श्रीकण्ठस्य द्वारा अहम् एतं विषयं ज्ञातवान्" इति ।

श्रीकण्ठस्य विषयं श्रुत्वा धान्यविक्रयण-चिन्तनम् एव परित्यज्य विवेकः वणिजं रङ्गनाथम् उद्दिश्य - "अहम् इदानीं धान्यविक्रयणं कर्तुं न इच्छामि" इति उक्त्वा तं प्रतिप्रेषितवान् ।

रङ्गनाथस्य गमनानन्तरं विवेकस्य पत्नी पतिं बोधितवती - "भवतः एतादृशेन व्यवहारेण देवरः श्रीकण्ठः खिन्नः भवेत् । सः स्वकीयं दुष्टस्वभावं परिवर्तयितुम् इच्छन् बहुधा प्रयतमानः अस्ति । किन्तु भवान् तद्विषयकेण कोपेन अविवेकेन व्यवहरन् अस्ति । एतत् न उचितं खलु !" इति ।

तदा विवेकः उक्तवान् - "श्रीकण्ठः मम



शत्रुः । तद्विषये मया सकृत् प्रकटितः विश्वासः एव पितुः प्राणापहारकः अभवत् । तस्मिन् विश्वासप्रकटनेन मया महती हानिः अनुभूता । अतः अहम् इदानीं तद्विषये विश्वासं प्रकटयितुं न इच्छामि । तस्मात् कारणात् हानिः भवति चेत् अपि अहं सोढुं सिद्धः अस्मि'' इति ।

प्रतापपुरस्थस्य विवेकस्य विषये यद्यपि जनानाम् उत्तमा भावना आसीत्, तथापि श्रीकण्ठस्य कारणतः विवेकविषयकः जनानां भावः किञ्चिदिव परिवृत्तः । जनाः परस्परं सम्भाषणं कुर्वन्ति स्म यत् - शत्रुणा क्रियमाणं सत्कार्यम् अपि अवगन्तुं न शक्नोति विवेकः इति ।

विवेकस्य केचन स्नेहिताः उक्तवन्तः - ''भवान् स्वव्यवहारे हानिम् अनुभवतु इति उद्देशेन एव श्रीकण्ठः बहुत्र गत्वा स्वनाम वदन् अस्ति । अतः भवान् शत्रुत्वं विस्मृत्य श्रीकण्ठेन सह विवेकेन व्यवहरतु'' इति ।

स्नेहितानाम् एतादृशानि वचनानि श्रुत्वा अपि विवेकः मन्दहासं प्रकटय्य मौनम् आश्रयति स्म ।

कदाचित् नारायण-विश्वनाथनामकौ द्वौ वणिजौ विवेकतः नारिकेलानि क्रेतुम् इष्टवन्तौ । तयोर्मध्ये विश्वनाथः प्रथममेव वैयक्तिकतया विवेकस्य सम्पर्कं कृत्वा तम् उक्तवान् - ''सः श्रीकण्ठः नारायणं कमपि उपायं सूचितवान् अस्ति । अतः नारायणः वदति - 'एतस्मिन् प्रदेशे सर्वेषाम् अपि सकाशात् अपि अहम् एव नारिकेलानि क्रीणामि । अत्र वाणिज्यार्थं विश्वनाथाय अवकाशम् एव न कल्पयामि' इति'' इति ।

एतत् श्रुत्वा विवेकः तस्मिन् एव दिने सर्वाणि अपि नारिकेलानि विश्वनाथाय विक्रीतवान् । एतत् ज्ञात्वा विवेकस्य पत्नी पतिम् उक्तवती - ''श्रीकण्ठस्य नाम वदन्तः बहवः भवन्तं वञ्चयन्ति । भवान् अपि तान् सर्वान् स्नेहितान् मत्वा महतीं हानिम् अनुभवन् अस्ति । भवतः नयवञ्चकानां मित्राणाम् अपेक्षया श्रीकण्ठः एव वरं खलु !'' इति ।

तदा विवेकः दृढस्वरेण पत्नीम् उक्तवान् - ''सर्वेषाम् अपि स्वभावम् अहं जानामि । अतः अहं सम्यक् विचिन्त्य एव व्यवहरन् अस्मि । दिने दिने मम आयः वर्धमानः एव



अस्ति। भवती वृथा किमर्थं चिन्तां करोति ? श्रीकण्ठः तु मम शत्रुः। शत्रुः कदाचित् वा मित्रं भवेत् वा ? न खलु ! मम पितुः प्राणहारके कथं वा विश्वसिमि अहम् ? अतः श्रीकण्ठविषये गौरवप्रदर्शनपूर्वकं प्रसिद्धेः प्राप्त्यपेक्षया अपि तेन सह शत्रुत्वेन व्यवहारः एव मम तृप्तिं जनयति। इतःपरं भवती कदापि श्रीकण्ठस्य विषयं मा वदतु मत्समीपे'' इति।

कानिचन दिनानि अतीतानि। कदाचित् श्रीकण्ठः कार्यनिमित्तं प्रतापपुरम् आगतवान् आसीत्। सायङ्कालसमये मार्गे यदा गच्छन् आसीत् सः, तदा कश्चन सर्पः श्रीकण्ठं दष्टवान्। सर्पदंशनेन श्रीकण्ठः मूर्च्छां गतः। तावता बहवः जनाः तत्र सम्मिलिताः। एतस्मात् भीताः केचन वैद्यम् आनेतुं गतवन्तः। अपरे केचन किङ्कर्तव्यतामूढाः सन्तः मौनं स्थितवन्तः।

तस्मिन् समये तेन मार्गेण गच्छन् विवेकः प्रवृत्तं विषयं ज्ञात्वा तत्र स्थितान् जनान् उद्दिश्य - ''किमर्थं मौनं स्थित्वा पश्यन्तः सन्ति भवन्तः ? चिकित्सातः पूर्वम् एव यावच्छीघ्रं शरीरे प्रविष्टं विषं बहिः आनेतव्यम्'' इति वदन् श्रीकण्ठस्य समीपे उपविष्टवान्। सर्पेण दष्टं पादं हस्तद्वयेन अपि उन्नीय स्वमुखेन विषं बहिः आनीतवान्। केषुचित् एव क्षणेषु विवेकः मूर्च्छां गतः। तावता वैद्यः आगतवान्। वैद्यः मूर्च्छावस्थां प्राप्तवन्तौ उभौ अपि स्वगृहं नीत्वा तयोः औषधोपचारं कृतवान्।

एतां घटनां दृष्टवन्तः सर्वे अपि आश्चर्यचकिताः। 'इदानीं विवेकः श्रीकण्ठविषयकं शत्रुत्वं विस्मृत्य स्वदोषं ज्ञातवान् अस्ति' इति केचन परस्परम् उक्तवन्तः।

अन्ये केचन उक्तवन्तः - ''रक्षणसामर्थ्यम् अस्ति चेदपि यदि रक्षणं न क्रियते, तर्हि तत् पापकरम्, हननदोषः अपि। श्रीकण्ठः मृतः भवति चेत् मया एव मारितः इव भवति इति विचिन्त्य विवेकः भीतः स्यात्'' इति।

चिकित्साकरणात् किञ्चित्कालानन्तरं श्रीकण्ठः विवेकः च सचेतनौ जातौ।

वैद्यः उभौ अपि उद्दिश्य उक्तवान् - ''इतःपरं प्राणभयं नास्ति भवतोः'' इति।

अनन्तरं श्रीकण्ठः प्रवृत्तं सर्वं ज्ञात्वा

विवेकम् उद्दिश्य - "भवान् न सामान्यः, अपि तु महानुभावः एव । स्वप्राणापायम् अपि अविगणय्य शत्रोः रक्षणं सर्वैः न शक्यते" इति वदन् तं नमस्कृतवान् ।

तदा विवेकः - "भवान् मम शत्रुः । भवता क्रियमाणः नमस्कारः प्रशंसा वा मम स्वभावं न परिवर्तयति" इति वदन् ततः निर्गतवान् ।

वेतालः एवं कथां समाप्य अवदत् - "राजन् ! स्वपितुः मरणस्य कारणीभूतं श्रीकण्ठं विवेकः शत्रुं मन्यते इति यत् तत्र न किमपि आश्चर्यम् । किन्तु तादृशः परमशत्रुः अपि यदा सर्पेण दष्टः अभवत्, तदा विवेकः स्वप्राणापायम् अपि अविगणय्य श्रीकण्ठं रक्षितवान् । एषः व्यवहारः विवेकस्य बुद्धिमत्तां द्योतयति वा ? शत्रुं श्रीकण्ठं स्वयं मारयितुम् अशक्तः विवेकः सर्पेण दष्टं श्रीकण्ठं दृष्ट्वा अतीव सन्तुष्टः स्यात् खलु ! आत्मना साधयितुम् अशक्तं सर्पेण साधितम् इति विवेकः तृप्तः स्यात् खलु ! एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - "वस्तुतः विवेकः सज्जनः दयालुः च । अपि च सः लोकव्यवहारं सम्यक् जानाति । अतः एव सः शत्रुविषये शत्रुत्वविषये वा पूर्वाग्रहाविष्टः न जातः । श्रीकण्ठतः सकृत् महतीं हानिम् अनुभूतवान् विवेकः लाभ-प्राप्त्यवकाशे सत्यपि श्रीकण्ठे न विश्वसितवान् । अपि तु ततः दूरे एव स्थितवान् । यः शत्रुत्वविषये पूर्वाग्रहपीडितः भवति, सः सदा अपि शत्रोः अहितम् एव चिन्तयन् भवति । किन्तु विवेकस्य तु श्रीकण्ठविषये द्वेषः न आसीत् । किन्तु तस्मिन् विश्वासं न प्रकटयति स्म सः । अतः एव सः स्वप्राणापायम् अपि अविगणय्य श्रीकण्ठं रक्षितवान्" इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा पुनरपि वृक्षस्य शाखाम् अवलम्बितवान् ।



# शिलाराशेः उपरि दीपः

भूस्वामी केशववर्मा कस्यचन प्रमुखकार्यस्य निमित्तं वेलापुरतः विशालनगरं गतवान्। कार्यं समाप्य प्रस्थानसमये मध्यरात्रम् अभवत्। तथापि आत्मानं धनिकं मन्यमानः सः स्वरथम् आरुह्य वेलापुरं प्रति प्रस्थितः। अरण्यमार्गः अन्धकारमयः आसीत्। सारथिः अत्यन्तं जागरूकतया रथं चालयति स्म।

मध्येमार्गं कश्चित् शिलाराशिः विघ्नरूपेण आसीत्। रथः शिलाराशिना घट्टितः अभविष्यत्। किन्तु शिलाराशेः उपरि स्थितस्य दीपस्य प्रकाशस्य कारणतः सारथिना शिलाराशिः दृष्टः। सः अनुक्षणं रथं स्थगितवान्।

एतत् दृष्ट्वा भूस्वामी रथात् अवतीर्णः। तावता मार्गपार्श्वे एव कस्यचित् वृक्षस्य अधः शयितः वृद्धः उत्थाय आगतवान्, भूस्वामिनं नमस्कृतवान् च।

भूस्वामी तं वृद्धं पृष्टवान् - ''एतस्य शिलाराशेः उपरि स्थितः दीपः भवता स्थापितः वा ?'' इति।

''आम्, श्रीमन्। अहम् एव स्थापितवान्। रात्रिसमयः खलु।'' इति उक्तवान् वृद्धः।

एतस्मात् सन्तुष्टः भूस्वामी - ''भवतः कारणतः अद्य आवां रक्षितौ। एतत् स्वीकरोतु'' इति वदन् कानिचन नाणकानि वृद्धाय दत्तवान्।

वृद्धः सन्तोषेण तानि नाणकानि स्वीकृत्य ततः गन्तुम् उद्युक्तः। तदा भूस्वामी संशयेन वृद्धं पृष्टवान् - ''किमर्थं मार्गस्य अवरोधपूर्वकम् एषः शिलाराशिः अस्ति ?'' इति।

तदा वृद्धः उक्तवान् - ''दीपः अधः स्थाप्यते चेत् न दृश्यते खलु। तदर्थम् अहम् एव शिलाखण्डान् राशीकृत्य, तदुपरि दीपं स्थापितवान् अस्मि'' इति।



## अस्मद्देशीया वृक्षसम्पत्

### पूगवृक्षः



ताम्बूलचर्वणार्थं नागवल्लीपर्णं सुधा च उपयुज्यते, तेन सह पूगः अपि उपयुज्यते। ताम्बूले तमाखुः न योज्यते चेदपि पूगस्य योजनं तु अवश्यं करणीयम् एव।

अधिकौन्नत्येन युक्ते पूगवृक्षे जायमानानां पूगानां मूल्यम् अपि बहु अधिकम्। यतः एतत् पूगफलं न केवलं ताम्बूलचर्वणार्थम्, अपि तु पूगतः लभ्यमानं 'टानिस्' नामकं रासायनिकवस्तु कृष्णवर्णीयायाः रक्तवर्णीयायाः च मष्याः निर्माणे उपयुज्यते। पक्वपूगफलस्य चूर्णं दन्तचूर्णस्य निर्माणार्थम् अपि उपयुज्यते।

सामान्यतः १८-२० मीटर् औन्नत्यवान् एषः पूगवृक्षः दर्शनेन अतीव सुन्दरः। एतस्य वृक्षस्य शाखाः न भवन्ति। एतस्य वृक्षस्य स्थौल्यं सामान्यतः १५ से.मी. भवति। ये पूगफलम् उत्पाटयन्ति, ते एकं वृक्षम् आरुह्य तत्रत्यानि फलानि उत्पाट्य, ततः अनुक्षणं न अवतरन्ति, अपि तु तस्मात् एव वृक्षात् अन्यान् वृक्षान् अवनमय्य झटिति उत्प्लुत्य अन्यं वृक्षम् आरोहन्ति। एवं प्रकारेण सर्वेषां वृक्षाणां फलोत्पाटनानन्तरम् अवतरन्ति। पूगवृक्षाः सुलभतया अवनताः भवन्ति इति कारणतः एवंरीत्या फलोत्पाटनं शक्यते। नारिकेलवृक्षाः सुलभतया अवनताः न भवन्ति।

सामान्यतः पूगवृक्षः पञ्चसु वर्षेषु फलति। वर्षे ३०० फलानि फलति वृक्षः। आरम्भे फलानि हरितवर्णीयानि भवन्ति। क्रमशः नारङ्गवर्णं प्राप्य पक्वताकाले रक्तवर्णतां प्राप्नुवन्ति। अण्डाकारकस्य एतस्य फलस्य अन्तर्भागे बृहदाकारकं बीजं भवति। पूगवृक्षस्य निमित्तम् अधिकप्रमाणेन वृष्टिः आवश्यकी। अतिवृष्टिप्रदेशेषु केरलम्, पश्चिमबङ्गालम्, आस्साम् इत्यादिषु राज्येषु पूगवृक्षाः अधिकतया दृश्यन्ते।

पर्णानाम् अधोभागे पूगपुष्पाणि गुच्छरूपेण भवन्ति। पुष्पाणां रक्षणार्थम् आवरणानि भवन्ति। पर्णानाम् अग्रभागाः विदारिताः इव दृश्यन्ते। पूगपर्णानि कुटीरस्य आच्छादनार्थं, काण्डभागः च स्तम्भनिर्माणार्थं उपयुज्यते।

एषः पूगवृक्षः वृक्षशास्त्रे 'एरिका केटेचुलिन्' इत्युच्यते। हिन्दी-मराठी-गुजरातीभाषासु 'सुपारि' इत्युच्यते। बङ्गालिभाषायां 'गुवा' इति, तमिळुभाषायां 'कमुगु' इति, मलयालभाषायां 'कवुङ्ङु' इति च उच्यते।



# वेदव्यासः

प्रपञ्चे एव प्राचीनतमाः ग्रन्थाः नाम वेदाः। ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः च प्राचीनतमाः ग्रन्थाः। एते कदा केन रचिताः इत्यत्र न किमपि प्रमाणम् उपलभ्यते। किन्तु षट्सहस्रवर्षेभ्यः पूर्वम् एते ग्रन्थाः रचिताः स्युः इति भाषाविज्ञानिनः अभिप्रयन्ति। ऋषयः यदा ध्यानमग्नाः भवन्ति स्म, तदा वेदमन्त्राः तेषां मनस्सु भगवतः प्रेरणया स्फुरिताः स्युः। तन्नाम वेदमन्त्राः मानवस्य मेधाशक्त्या न रचिताः, अपि तु भगवतः प्रेरणया इति जनाः अभिप्रयन्ति।

वेदव्यासः वेदमन्त्रान् चतुर्धा विभज्य तेषां नामकरणं कृतवान्। किन्तु अनन्तरकाले वेदसूत्राणि लिखितानि न अभवन्। गुरुणा पाठितानां वेदमन्त्राणां कण्ठपाठं कृत्वा शिष्याः स्वशिष्यान् पाठयन्ति स्म। तत्काले अध्ययनसमये लेखनपद्धतिः न आसीत् एव। बहुकालानन्तरं वेदमन्त्राः ग्रन्थरूपेण लिखिताः अभवन्।

महानुभावः व्यासः महाभारत- रचनापूर्वकं जनान् भारतीयसंस्कृतेः महत्त्वं बोधितवान्। अस्माकं देशे रामायणम् इव प्रसिद्धिं प्राप्तः अन्यः इतिहासग्रन्थः एव महाभारतम्। प्रपञ्चस्य अन्यस्यां कस्याञ्चित् अपि भाषायां महाभारतसदृशः महान् ग्रन्थः नास्ति। होमर्वर्येण रचितयोः इलियड्-ओडिस्सिग्रन्थयोः आकारः यावान् अस्ति ततोऽपि अष्टगुणितेन आकारेण युक्तः महान् ग्रन्थः महाभारतम्।

महाभारतस्य कथायां पात्राणि नैजानि सन्ति। आश्चर्यकराः सन्निवेशाः रमणीयतया वर्णिताः सन्ति। धर्माधर्मौ शास्त्रसम्प्रदायान् च रमणीयतया विवृणोति महाभारतम्।

व्यासः न केवलं महाभारतं रचितवान्, अपि तु आत्मानम् अपि महाभारतकथायां पात्रत्वेन योजितवान् इति तु एतस्य ग्रन्थस्य अपूर्वं वैशिष्ट्यम् ।

व्यासः महाभारतस्य रचनार्थं सङ्कल्पं कृत्वा लेखनं केन कारयामि इति चिन्तयन् आसीत् । तदा ब्रह्मदेवः प्रत्यक्षः सन् व्यासम् उक्तवान् - 'महाभारतस्य लेखनार्थं गणपतिं नियोजयतु' इति । व्यासः एतेन सन्तुष्टः ।

लेखकरूपेण आगतः गणपतिः स्वनियमं व्यासम् उक्तवान् - 'भवता निरन्तरं श्लोकाः वक्तव्याः । कथनसमये मध्ये कुत्रापि न स्थगनीयम्' इति ।

व्यासः गणपतेः वचनम् अङ्गीकृतवान् । सः अपि स्वनियमम् उक्तवान् - 'मया उच्यमानानां श्लोकानाम् अर्थं ज्ञात्वा एव भवता लेखनीयम्' इति । एतं नियमं गणपतिः अङ्गीकृतवान् । अनन्तरं गणपतिः व्यासः च बदरिकाश्रमसमीपस्थायां गुहायां स्थित्वा सार्धवर्षद्वयाभ्यन्तरे महाभारतस्य लेखनं पूर्णं कृतवन्तौ इति प्रतीतिः ।

'व्यासः' नाम सम्पादकः, विवरणकर्ता इति अर्थः । पवित्रान् वेदमन्त्रान् सङ्गृह्य, तेषां विभागं कृतवान् वेदव्यासः अत्यन्तं मेधावी । व्यासस्य अपरं नामधेयं 'कृष्णद्वैपायनः' इति ।

व्यासेन न केवलं महाभारतम्, अपि तु अष्टादश पुराणानि अपि लिखितानि सन्ति इति श्रूयते । किन्तु पण्डिताः एवम् अभिप्रयन्ति - 'केषाञ्चन पुराणानां लेखकाः व्यासशिष्याः गुरुभक्तिकारणतः व्यासस्य नाम्नि एव लिखितवन्तः स्युः' इति ।

व्यासः कस्मिन् काले आसीत् इति स्पष्टं न ज्ञायते । सः पञ्चसहस्रवर्षेभ्यः पूर्वं जीवितवान् स्यात् इति पण्डितानाम् अभिप्रायः ।



# भवन्तः जानन्ति वा ?

१. 'एलिफेण्टा' गुहाः कुत्र सन्ति ?
२. पञ्चदशशतके जातः भारतीयः महानुभावः कः, यं च हिन्दवः यवनाः च सादरं पश्यन्ति ?
३. अस्माकं देशस्य प्रथमा वैद्या का ?
४. अस्माकं देशे विमानसेना कदा आरब्धा ?
५. अस्माकं देशे कदा मूल्याङ्कस्य उपयोगः आरब्धः ?
६. अस्माकं देशे प्रथमम् आरब्धा नौकानिर्माणसंस्था का ? सा च संस्था कदा केन स्थापिता अभवत् ?
७. 'कामन्वेल्त्दिनं' कदा आचर्यते ?
८. एसुक्रिस्तः यदा शूलम् आरोपितः अभवत्, तदा सः स्वमातुः मेर्याः रक्षणार्थं कञ्चित् शिष्यं प्रार्थितवान् । सः शिष्यः कः ?
९. पुरातनमृत्पुलेखे नोवा-तातत्वेन प्रसिद्धिं प्राप्तः कः ?
१०. सः देशः कः, यस्मिन् क्रिकेट् एव राष्ट्रियक्रीडा जाता अस्ति ?
११. विमानस्य संशोधकयोः रैट्सहोदरयोः उद्योगः कः आसीत् ?
१२. 'डयमाना स्थालिका' प्रथमतया कदा दृष्टिगोचरतां गता ?
१३. सा का, या च 'दि लेडी वित् ल्याम्प्' इति प्रसिद्धिं गता अस्ति ?
१४. संयुक्तराष्ट्रसङ्घस्य प्रथमः प्रधानकार्यदर्शी कः ?
१५. सः लेखकः कः, यश्च स्वग्रन्थे 'अट्लाण्टिस्' वर्णितवान् अस्ति ?

## उत्तराणि

१. महाराष्ट्रे ।
२. कबीरः ।
३. डा।। आनन्दीबायी जोशी (१८८६)
४. १९३२ तमे वर्षे, अक्टोबर् ८ दिनाङ्के ।
५. १८५२ तमे वर्षे ।
६. विशाखपत्तनस्था हिन्दुस्थान् षिप्यार्ड् । १९४१ तमे वर्षे मुम्बयीनगरस्थया सिन्धिया स्टीम् नेविगेषन् संस्थया स्थापिता ।
७. मे-मासस्य २४ दिनाङ्के ।
८. जान् ।
९. मेथूस्ला ।
१०. आस्ट्रेलिया ।
११. द्विचक्रिकायाः आपणस्य सञ्चालनम् ।
१२. १९४७ तमे वर्षे जून् २४ तमे दिनाङ्के ।
१३. फ्लोरेन्स् नैटिङ्गेल् ।
१४. ट्रिग्विलीवर्यः ।
१५. प्लूटो ।



# श्रद्धालुः कुशः

सकलशास्त्रपारङ्गतः संन्यासी परमानन्दः अरण्ये वसन् तपः करोति स्म । सः प्रतिवर्षम् अपि कांश्चन शिष्यान् मेलयित्वा बोधयति स्म ।

शिवपुरस्थः गणनाथः वर्षं यावत् भक्त्या श्रद्धया च परमानन्दस्य सेवां कुर्वन् उत्तमं ज्ञानं सम्पादितवान् । तथापि गणनाथः खेदम् अनुभवति स्म – 'इतोऽपि मया ज्ञातव्याः विषयाः बहवः सन्ति' इति ।

तस्मिन् वर्षे परमानन्दसमीपे गणनाथम् अविहाय आहत्य दश शिष्याः आसन् । परमानन्दः आरम्भदिनेषु सर्वान् मेलयित्वा पाठं करोति स्म । केषाञ्चित् दिनानाम् अनन्तरं सः गणद्वयं कृत्वा पाठयति स्म । वर्षस्य मध्यभागे पुनरपि सामूहिकम् एव पाठं करोति स्म । किन्तु कुशनामकं शिष्यं केवलं पृथक् पाठयति स्म । एतत् दृष्ट्वा अन्ये शिष्याः चिन्तितवन्तः यत् – कुशविषये परमानन्दस्य महती श्रद्धा इति । यतः परमानन्दः प्रतिदिनम् अष्ट घण्टाः यावत् कुशं पाठयति स्म । इतरान् शिष्यान् घण्टाचतुष्टयं यावत् पाठयति स्म । गुरोः परमानन्दस्य एतां पक्षपातबुद्धिं सोढुम् अशक्ताः अन्ये शिष्याः कदाचित् परमानन्दं स्वमनस्स्थितिं निवेद्य पृष्टवन्तः – "अस्माभिः कः अपराधः कृतः ?" इति ।

तदा परमानन्दः उक्तवान् – "शिष्याणां योग्यतायाः अनुसारं कियत्कालं पाठनीयम् इति अहं निर्णयं करोमि । कुशः इव यदि भवन्तः अपि पाठितान् विषयान् शीघ्रम् अवगच्छन्ति, तर्हि भवतः सर्वान् तेन सह योजयिष्यामि" इति ।

गुरोः एतत् वचनं श्रुत्वा शिष्याः किमपि वक्तुम् अशक्ताः मौनम् आश्रितवन्तः ।

एकं वर्षम् अतीतम् । शिष्याणां प्रतिगमनदिनम् अपि सन्निहितम् । तदा गुरुः



परमानन्दः दर्शनेन समानानि दश बीजानि शिष्याणां पुरतः संस्थाप्य शिष्येषु अन्यतमं गणनाथम् उक्तवान् – 'एतानि बीजानि सम्यक् मिश्रीकृत्य सर्वेभ्यः एकैकं ददातु' इति। गणनाथः तथैव कृतवान्।

अनन्तरं परमानन्दः शिष्यान् उद्दिश्य – ''गणनाथः बीजानां मिश्रणं सम्यक् कृत्वा सर्वेभ्यः वितीर्णवान् अस्ति। अत्र पक्षपातः नास्ति इत्यत्र भवतां सर्वेषां विश्वासः अस्ति खलु !'' इति पृष्टवान्। सर्वे अपि शिष्याः अङ्गीकारपूर्वकं शिरः चालितवन्तः।

अनन्तरं परमानन्दः पुनः उक्तवान् – ''भवन्तः स्वगृहं गत्वा उद्याने आलवालं कृत्वा बीजम् आरोपयन्तु। एतेषु दशसु बीजेषु एकं बीजं केवलं नीलवर्णस्य पुष्पं दास्यति। यः बीजम् आरोप्य नीलवर्णीयं पुष्पं प्राप्स्यति, तेन तत् पुष्पं गुरुदक्षिणारूपेण मह्यं दातव्यम्। यः मह्यं गुरुदक्षिणां दास्यति, सः मया पाठितान् विषयान् सदा स्मरिष्यति। तादृशम् अवकाशं भवत्सु एकः केवलं प्राप्नोति। अन्यैः सर्वैः अपि सम्पादितस्य ज्ञानस्य रक्षणार्थं निरन्तरम् अभ्यासः करणीयः'' इति।

एतत् श्रुत्वा गणनाथः खेदेन – ''गुरुदेव! इतोऽपि उत्तमां गुरुदक्षिणां दातुं समर्थाः वयम्। एवं सति केवलम् एतेन पुष्पेण एव तृप्तिः अनुभोक्तव्या नास्ति खलु भवता ?'' इति पृष्टवान्।

तदा परमानन्दः उक्तवान् – ''यदि एतस्य पुष्पस्य चर्वणं कृत्वा गिलनं क्रियते, तर्हि 'कदा वृष्टिः भवेत्' इति विषयः मासात्पूर्वम् एव ज्ञायते। तादृशी शक्तिः मया प्राप्तव्या इति मम गुरोः इच्छा आसीत्। अतः एव अहं भवतां साहाय्यं प्रार्थयन् अस्मि'' इति।

अनन्तरदिने एव शिष्याः सर्वे अपि स्वस्वग्रामं प्रति प्रस्थिताः।

गणनाथः शिवपुरं गत्वा स्वगृहस्य उद्याने आलवालं कृत्वा बीजम् आरोपितवान्। गणनाथः आगतवान् अस्ति इति ज्ञात्वा तद्ग्रामीणाः ज्येष्ठाः गणनाथं द्रष्टुम् आगतवन्तः। तस्य विद्याभ्यासविषयं विचारितवन्तः च।

गणनाथः स्वकीयस्य अध्ययनस्य विषये विस्तरेण ग्रामज्येष्ठान् उक्तवान्। सर्वं श्रुत्वा कश्चित् वृद्धः उक्तवान् – ''एतादृशम्

अध्ययनं वयं न जानीमः। वृष्टेः आगमनम् अजानन्तः वयं योग्यकाले धान्यं वर्धयितुम अपि अशक्ताः जाताः। यदि भवान् वृष्टेः आगमनं पूर्वम् एव वक्तुं शक्नुयात्, तर्हि वयं भवन्तं शिबिकायाम् उपवेश्य देवं मत्वा पूजयिष्यामः'' इति।

वृद्धस्य एतत् वचनं श्रुत्वा गणनाथस्य मनसि विचारतरङ्गाः उत्पन्नाः। 'उद्याने आरोपितं बीजं यदि नीलवर्णीयं पुष्पं दास्यति, तर्हि तत् परमानन्दाय गुरुदक्षिणारूपेण दातव्यं खलु' इति चिन्तयन् गणनाथः खिन्नः। तथापि तस्य मनसि दुराशा उत्पन्ना आसीत् इति कारणतः सः निर्णीतवान् - 'गुरुदक्षिणां परमानन्दाय न ददामि चेत् मया सम्पादितं ज्ञानं विस्मृतं भविष्यति। तथापि न कापि चिन्ता मम। नीलवर्णीयस्य पुष्पस्य गिलनेन सर्वं स्मृतं भविष्यति। गुरुणा पाठितस्य ज्ञानस्य अपेक्षया अपि वृष्टेः आगमनज्ञानार्थं या अपूर्वा शक्तिः आवश्यकी, तां सम्पाद्य कीर्तिमान् भवितुं शक्ष्यामि, धनवान् च भविष्यामि' इति।

एवं चिन्तयन् गणनाथः प्रतिदिनम् अपि देवालयं गत्वा देवं प्रार्थयति स्म यत् - गुरुणा दत्तं बीजम् उद्याने अङ्कुरितं सत् सस्यं भवतु। तच्च सस्यं नीलवर्णपुष्पयुक्तं भवतु इति।

दिनानि अतीतानि। बीजम् अङ्कुरितं जातम्। सस्यरूपेण परिणतं च। केषाञ्चित् दिनानाम् अनन्तरं तत् सस्यं पुष्पितम्



अभवत्। आश्चर्यं नाम तत् पुष्पं नीलवर्णीयम् आसीत्।

एतत् दृष्ट्वा गणनाथः अतीव सन्तुष्टः।

'गुरुः परमानन्दः पक्षपातबुद्ध्या कुशम् एव अधिकान् विषयान् पाठितवान् अस्ति। दयामयः देवः तु निष्पक्षपाती। अतः एव नीलवर्णीयं पुष्पं कुशस्य उद्याने न जातम्, अपि तु मया आरोपिते सस्ये जातम् अस्ति। यद्यपि बीजं गुरुणा दत्तं, तथापि पुष्पं तु भगवतः अनुग्रहेण मया प्राप्तम् अस्ति। तस्मात् अहम् एतस्य पुष्पस्य चर्वणं कृत्वा अपूर्वां शक्तिं सम्पादयिष्यामि एव' इति विचिन्त्य गणनाथः तत् पुष्पं गीर्णवान्।

पुष्पस्य चर्वणस्य अनन्तरं गणनाथेन वृष्टेः आगमनं कदा भवेत् इति विषयः ज्ञातः।



अपरक्षणे एव सः ग्रामाधिकारिणः समीपं गत्वा तम् उक्तवान् - ''भोः ! अस्माकं ग्रामीणानां हितम् एव चिन्तयन् अहं मम सर्वज्ञानस्य उपयोगेन वृष्टेः आगमनं कदा भवेत् इति ज्ञानं सम्पादितवान् अस्मि । दिनद्वयाभ्यन्तरे एव अस्माकं ग्रामे महती वृष्टिः भविष्यति'' इति ।

तेषु दिनेषु तस्मिन् ग्रामे महान् आतपः आसीत् । तादृशे ग्रीष्मकाले तद्ग्रामे कदापि वृष्टिः न जाता आसीत् । अतः गणनाथस्य वचने न विश्वसितवान् ग्रामाधिकारी । किन्तु सः तं विषयं ग्रामस्थान् सर्वान् सूचितवान् । केचन तस्मिन् विषये विश्वासं प्रकटितवन्तः । अन्ये केचन उपहासं कृतवन्तः ।

गणनाथस्य वचनानुगुणं शिवपुरे द्वित्रेषु दिनेषु एव महती वृष्टिः अभवत् । एतस्मात् कारणात् जनानां गणनाथविषये विश्वासः उत्पन्नः । पार्श्वस्थेभ्यः ग्रामेभ्यः अपि वृष्टेः आगमनकालं ज्ञातुं जनाः गणनाथसमीपम् आगच्छन्ति स्म । एतस्मात् वर्षद्वयाभ्यन्तरे एव गणनाथः महान् धनिकः जातः ।

एवं स्थिते कदाचित् शिवपुरं क्षामपीडितम् अभवत् । वर्षद्वयं यावत् वृष्टिः एव न जाता । गणनाथः ग्रामस्थान् उक्तवान् यत् - इतोऽपि एकमासं यावत् वृष्टिः न भविष्यति इति ।

तेषु एव दिनेषु पार्श्वस्थात् ग्रामात् कश्चित् आगत्य शिवपुरस्य ग्रामाधिकारिणं दृष्टवान् । तस्मिन् समये अन्ये केचन गणनाथः च ग्रामाधिकारिणा सह वार्तालापं कुर्वन्तः आसन् ।

पार्श्वग्रामात् आगतं दृष्ट्वा गणनाथः चिन्तितवान् यत् - एषः मां द्रष्टुम् एव आगतवान् अस्ति इति । अतः गणनाथः आगतम् उद्दिश्य उक्तवान् - ''भवतः ग्रामं प्रति मम आगमनेन कः लाभः ? सर्वत्र क्षामः अस्ति एव । वृष्टिः यदि अस्माकं ग्रामे न भवति, तर्हि भवतः ग्रामे अपि न भवति'' इति ।

तदा पार्श्वग्रामस्थः गणनाथं सविनयम् उक्तवान् - ''महानुभाव ! वृष्टिः कदा भवेत् इति भवतः कथनं पूर्वं सत्यं भवति स्म । किन्तु अस्मिन् सन्दर्भे भवता उक्तं सत्यं न जातम् । मम ग्रामं प्रति कश्चन महानुभावः

आगतवान् अस्ति । तेन उक्तम् आसीत् - दिनद्वयाभ्यन्तरे वृष्टिः भविष्यति इति । तत् सत्यम् अभवत् । तं महानुभावं भवतां ग्रामं प्रत्यपि आह्वयन्तु भवन्तः । तस्य अनुग्रहेण अत्रापि वृष्टिः भविष्यति'' इति ।

एतत् श्रुतवतः गणनाथस्य मुखं म्लानम् अभवत् । गणनाथेन बहुधा निवार्यमाणाः अपि तद्ग्रामस्थाः पार्श्वग्रामं प्रति आगतं महानुभावम् आहूतवन्तः । सः आगत्य उक्तवान् यत् - अनन्तरदिने एव वृष्टिः भविष्यति इति । तस्य वचनानुसारम् अनन्तरदिने एव वृष्टिः जाता अपि ।

एतस्मात् गणनाथः आश्चर्यचकितः । पार्श्वग्रामात् आगतः कुशः इति ज्ञात्वा गणनाथः प्रवृत्तं सर्वं कुशं निवेद्य खेदेन उक्तवान् - ''अद्यपर्यन्तम् अपि मया उक्तं भविष्यं सत्यम् एव अभवत् । अहम् अद्य पराजितः अभवम् । किन्तु अहं चिन्तयामि यत् - भवता यत् भविष्यम् उक्तं, तत्र गुरोः प्रभावः कोऽपि अस्ति इति'' इति ।

तदा कुशः मन्दहासपूर्वकम् उक्तवान् - ''भवान् अन्यथा भावितवान् अस्ति । अत्र गुरोः प्रभावः कोऽपि नास्ति । गुरुः परमानन्दः अस्मभ्यं सर्वेभ्यः अपि समानम् एव बीजं दत्त्वा अस्माकं गुरुभक्तिं परीक्षितवान् । मां विहाय अन्यः कोऽपि शिष्यः तत् पुष्पं स्वीकृत्य गुरोः समीपं न गतवान् । मया तत् नीलवर्णीयं पुष्पम् गुरवे अर्पितम् । मम गुरुभक्त्या सन्तुष्टः परमानन्दः अकाले अपि वृष्टेः सम्पादनार्थं या अपूर्वा शक्तिः आवश्यकी, तया शक्त्या माम् अनुगृहीतवान् अस्ति । अपूर्वशक्तेः दुरुपयोगः न करणीयः इति विषयं पुनः पुनः मां स्मारितवान् अस्ति गुरुः । अतः अहं 'मयि अपूर्वा शक्तिः अस्ति' इति कमपि न वदामि । यथाशक्ति जनानां साहाय्यं कुर्वन् अस्मि'' इति ।

कुशस्य एतत् वचनं श्रुत्वा गणनाथः - 'अध्ययनविषये, गुरुभक्तिविषये च कुशस्य महती श्रद्धा आसीत् । तादृशी श्रद्धा अन्येषु न आसीत् इति कारणतः एव कुशं पृथक् पाठयति स्म गुरुः' इति ज्ञातवान् ।





# योग्यतायाः परीक्षा

कलिङ्गदेशस्य वयोवृद्धः मन्त्री अकस्मात् दिवङ्गतः इति कारणतः महाराजः कीर्तिवर्मा चिन्ताक्रान्तः। केनापि प्रकारेण कलिङ्गस्य उपरि आक्रमणार्थं प्रतिवेशिराज्यानां महाराजाः सुसमयं प्रतीक्षमाणाः आसन् । तादृशस्य विशालराज्यस्य रक्षणार्थं पालनार्थं च बलवतः महाराजस्य, राजतन्त्रनिपुणस्य मन्त्रिणः च आवश्यकता आसीत्।

दिवङ्गतः महामन्त्री सर्वकार्येषु अपि निपुणः अनुभवी च आसीत्। तादृशः चतुरः अनुभवी च अन्यः कोऽपि न आसीत् कीर्तिवर्मणः आस्थाने । अतः कीर्तिवर्मा चिन्तितवान् यत् – आस्थाने एव विद्यमानेषु मन्त्रित्वेन कस्यचित् चयनं यदि अहं करोमि, तर्हि तेन किमपि प्रयोजनं नास्ति इति।

राजा कीर्तिवर्मा बहु विचिन्त्य समग्रे कलिङ्गदेशे प्रकटनं कारितवान् – 'कलिङ्ग-देशस्य महामन्त्रिपदव्यर्थं विवेकवतः चातुर्यवतः च कस्यचित् आवश्यकता अस्ति। किन्तु केनापि पदवीप्राप्तेः आशया न आगन्तव्यम् । यतः अत्र योग्यतापरीक्षा क्रियते । दर्शनमात्रेण एव एषः एव मन्त्रिपदव्यर्थं योग्यः इति भावना भवेत् अस्माकम् । तादृशाः मुखकान्तिमन्तः एव योग्यतापरीक्षार्थम् आगच्छेयुः' इति।

'यः महामन्त्री भविष्यति, सः विवेकी चतुरश्च भवेत्' इति तु समीचीनः अंशः । किन्तु 'मुखलक्षणं समीचीनं भवेत्' इति यः नियमः कृतः सः न अरोचत जनेभ्यः। किन्तु तत् न समीचीनम् इति महाराजं वक्तुं कस्यापि धैर्यं न आसीत्।

कलिङ्गदेशे बहवः प्रतिभावन्तः आसन् एव । किन्तु महाराजेन कृतस्य नियमस्य अनुसारं बहूनां मुखे कान्तिः तेजः च न

आसीत् इति कारणतः प्रतिभावन्तः अपि मन्त्रिपदव्यर्थं महाराजसमीपं गन्तुं न इष्टवन्तः। केचन स्वमुखे कान्तिः अस्ति इति चिन्तयन्तः राजभवनं गत्वा महाराजं दृष्टवन्तः। किन्तु महाराजस्य चिन्तनानुसारं तेषु पर्याप्तमात्रेण बुद्धिमत्ता चातुर्यं च न आसीत् इति कारणतः ते निराशया प्रतिगतवन्तः।

श्रीधरः कलिङ्गदेशस्य राजधान्यां निवसति। सः अतीव चतुरः बुद्धिमान् च। सः शास्त्राणि सम्यक् अधीतवान् आसीत्। राज्यपरिपालनक्रमम् अपि सम्यक् जानाति स्म श्रीधरः। किन्तु समस्या नाम श्रीधरस्य सुन्दरं कान्तिमत् च मुखं न आसीत्। सः कृष्णवर्णीयः आसीत्। मुखे सर्वत्र शीतलरोगजनितानि चिह्नानि आसन्।

मन्त्रिपदव्यर्थं प्रयत्नः तु करणीयः इति चिन्तयन् श्रीधरः निर्णीतवान् यत् - केनापि उपायेन महाराजः द्रष्टव्यः इति।

कदाचित् प्रातःकालसमये राजा कीर्तिवर्मा उद्याने विहरन् आसीत्। तस्मिन् समये श्रीधरः तत्र गतवान्।

उद्यानस्य द्वाररक्षकः अनतिदूरे एव केनचित् सह सम्भाषमाणः आसीत् इत्यतः श्रीधरस्य उद्यानप्रवेशं न ज्ञातवान्।

श्रीधरः महाराजस्य कीर्तिवर्मणः समीपं न गतवान्, अपि तु उद्यानस्य कोणे सस्यानां जलसेचनं कुर्वतः उद्यानपालकस्य समीपं गत्वा - "महाराज ! मम मातापितरौ दिवङ्गतौ। अनाथः अहं कुत्रापि उद्योगं प्राप्तुम् अशक्तः महत् कष्टम् अनुभवन् अस्मि। कृपया मह्यं कमपि उद्योगं दापयतु" इति वदन्



साष्टाङ्गं नमस्कृतवान् ।

एतत् दृष्ट्वा कुपितः राजा कीर्तिवर्मा वेगेन श्रीधरसमीपम् आगत्य पृष्टवान् - "कुतः आगतवान् भवान् ?" इति ।

'अहं कलिङ्गदेशे एव निवसामि' इति उत्तरं दत्तवान् श्रीधरः ।

तदा "एतस्मिन् एव देशे निवसन् अपि एतस्य देशस्य राजा कः इति न जानाति वा भवान् ? अहम् एव कलिङ्गदेशस्य महाराजः अस्मि । भवता नमस्कृतः एषः मम उद्यानस्य पालकः । ज्ञातं खलु !" इति उक्तवान् कीर्तिवर्मा ।

एतत् श्रुत्वा श्रीधरः महाराजं नमस्कृत्य उक्तवान् - "महाराज ! कृपया क्षाम्यतु । अद्यपर्यन्तम् अपि मया भवान् न दृष्टः आसीत् इति कारणतः प्रमादः जातः । महाराजः इव भवान् अलङ्कृतः न आसीत् । अतः अहं भवन्तं न अभिज्ञातवान् । एतस्य उद्यानपालकस्य औन्नत्यं, दृढकायतां, कान्तियुते नयने च दृष्ट्वा अहं चिन्तितवान् - 'एषः एव राजा' इति । भवतः अपमाननं करणीयम् इति मम उद्देशः सर्वथा नास्ति" इति ।

श्रीधरस्य एतत् वचनं श्रुत्वा राजा कीर्तिवर्मा केभ्यश्चित् दिनेभ्यः पूर्वं मन्त्रिपदव्यर्थम् आत्मना कारितं प्रकटनं स्मृतवान् । मन्दहासपूर्वकं श्रीधरम् उक्तवान् - "मन्त्रिपदव्यर्थं मया कारितस्य प्रकटनस्य लोपदोषं भवान् उपायेन मां बोधितवान् अस्ति ! भवतः बुद्धिमत्ता चातुर्यं च प्रशंसार्हम् एव । एतादृशाय भवते सामान्यम् उद्योगं दातुं न इच्छामि अहम्, अपि तु उत्तमम् एव उद्योगं दापयिष्यामि । श्वः प्रचलिष्यमाणायां योग्यतापरीक्षायां भागं गृहीत्वा मन्त्रिपदवीं प्राप्नोतु भवान् । यतः इदानीम् अहं ज्ञातवान् अस्मि - 'रूपेण वा मुखस्य तेजसा वा न किमपि प्रयोजनम् अस्ति' इति" इति ।

अनन्तरदिने राजभवने योग्यतापरीक्षा कृता । तस्यां परीक्षायां जयं प्राप्य श्रीधरः कीर्तिवर्मणः मन्त्री जातः । अनन्तरकाले सः स्वकार्यं श्रद्धया निर्वहन् 'समर्थः मन्त्री' इति ख्यातिं प्राप्तवान् ।






दुर्योधनस्य कुतन्त्रकारणतः भीमः गङ्गायां पतित्वा पाताललोकं गतवान् इति विषयं युधिष्ठिरः न जानाति स्म । सः भीमं सर्वत्र अन्विष्टवान् । किन्तु कुत्रापि भीमः तेन न दृष्टः । अनन्तरं सः दुर्योधनं पृष्टवान् - ''भीमः कुत्र ?'' इति ।

''सः तदानीम् एव नगरं गतवान्'' इति उक्तवान् दुर्योधनः ।

एतत् श्रुत्वा युधिष्ठिरः अनुक्षणं नगरं गत्वा कुन्तीं पृष्टवान् - ''भीमः अत्र आगतवान् वा ?'' इति ।

कुन्ती उक्तवती - 'न' इति ।

तस्मात् खिन्नः युधिष्ठिरः कुन्तीम् उक्तवान् - ''गङ्गातीरे शयितं भीमं दृष्टवान् आसम् अहम् । किञ्चित्कालानन्तरं सः तत्र न आसीत् । अनन्तरं सः सर्वत्र अन्विष्टः मया । तथापि किमपि प्रयोजनं न जातम्'' इति ।

एतां वार्तां श्रुत्वा कुन्ती अतीव दुःखिता । सा युधिष्ठिरम् उद्दिश्य - ''भवान् अनुजैः सह सर्वत्र गत्वा भीमस्य अन्वेषणं करोतु'' इति उक्त्वा विदुरम् आहूय उक्तवती - ''सर्वैः सह प्रमाणकोटिं गतः भीमः न प्रत्यागतः । युधिष्ठिरेण गङ्गातीरे सर्वत्र सः अन्विष्टः । किन्तु किमपि प्रयोजनं न जातम् । भीमस्य विषये दुर्योधनस्य महती असूया । अतः दुर्योधनः भीमं मारितवान् अपि स्यात् वा इति सन्देहम् अनुभवन्ती अहं भीता अस्मि'' इति ।

तदा विदुरः - ''एतं विषयं अन्यत्र कुत्रापि मा वदतु भवती । दुर्योधनः तु महादुष्टः । यदि सः एतं विषयं शृणुयात्, तर्हि भवत्याः अन्यान् अपि पुत्रान् मारयितुं प्रयत्नं



कुर्यात् । किन्तु भीमसेनस्य प्राणभयं तु नास्ति । भवत्याः सर्वे अपि पुत्राः दीर्घायुष्मन्तः एव । अतः भवती चिन्तां मा करोतु'' इति उक्त्वा ततः गतवान् ।

तत्र नागलोके भीमः सप्ताहं यावत् सुखेन निद्रां कृत्वा उत्थितवान् । तदा सर्वे अपि नागाः तम् उक्तवन्तः - ''भवता पीतः सुधारसः सम्यक् जीर्णतां प्राप्तवान् अस्ति इदानीम् । इदानीं भवान् सहस्रगजानां समानः अस्ति । गङ्गायां स्नात्वा स्ववासस्थानं प्राप्नोतु भवान्'' इति ।

भीमः एतत् अङ्गीकृतवान् ।

अनन्तरं सर्वे अपि नागाः गङ्गानद्यां भीमस्य स्नानं कारयित्वा धरणार्थं तस्मै पीताम्बरं दत्तवन्तः । अनन्तरं च उत्तमाभिः मूलिकाभिः निर्मितं पायसं भीमं पाययित्वा आभरणैः तम् अलङ्कृतवन्तः । अनन्तरं कश्चित् नागः भीमं स्वबाहुभ्याम् उन्नीय प्रमाणकोटि-समीपस्थम् उद्यानं नीतवान् । ततः भीमः आत्मानं प्रापयितुम् आगतं नागं प्रीत्या नमस्कृत्य हस्तिनापुरं गत्वा मातरम् अग्रजं च नमस्कृत्य अनुजान् प्रीत्या आलिङ्गितवान् ।

भीमः सुरक्षितं गृहं प्रत्यागतः इति सर्वे अपि अतीव सन्तुष्टाः ।

अनन्तरं भीमः दुर्योधनेन कृतं विषमिश्रितम् आहारदानम्, अनन्तरं च हस्तौ पादौ बद्ध्वा नद्यां क्षेपणं, ततः नागलोकं गतेन आत्मना प्राप्ताः अनुभवाः इत्यादिकं विस्तरेण मातरं निवेदितवान् । दुर्योधनस्य दुर्व्यवहारात् कुन्ती अतीव दुःखम् अनुभूतवती । किन्तु पुत्रः सुखेन प्रत्यागतवान् इत्यतः सा समाधानं प्राप्तवती ।

अनन्तरदिनेषु भीष्मः कौरव-पाण्डवपुत्राणां धनुर्विद्यायाः अभ्यासार्थं गुरुत्वेन कृपाचार्यं नियोजितवान् । पुत्राः सर्वे अपि कञ्चन कालं यावत् कृपाचार्यात् शिक्षणं प्राप्तवन्तः । अनन्तरं भीष्मः तेषां गुरुत्वेन द्रोणाचार्यं नियोजितवान् ।

द्रोणः मुनेः भरद्वाजस्य पुत्रः । सः यदा प्रौढः जातः, तदा वेदवेदाङ्गानि अधीत्य अस्त्रविद्यां सम्पादयितुम् इच्छन् अग्निवेशनामकस्य गुरोः समीपं गतवान् । अग्निवेशस्य शिष्यत्वेन स्थित्वा आग्नेयादीनि

अस्त्राणि प्राप्तवान् ।

अग्निवेशस्य सकाशे अन्यः अपि कश्चित् शिष्यः आसीत् । सः पाञ्चालराजस्य वृषकेतोः पुत्रः द्रुपदः । द्रुपदस्य द्रोणस्य च गुरुः समानः आसीत् इति कारणतः तयोः महान् स्नेहः आसीत् ।

कानिचन वर्षाणि अतीतानि । पाञ्चाल-राजः वृषकेतुः दिवङ्गतः । तदनन्तरं वृषकेतोः पुत्रः द्रुपदः महाराजपदवीम् आरूढवान् । द्रोणस्य पिता भरद्वाजः अपि द्रुपदस्य पट्टाभिषेकार्थं गतवान् आसीत् ।

अनन्तरकाले द्रोणः कृपाचार्यस्य अनुजां कृपीं परिणीतवान् । तयोः अश्वत्थाम-नामकः पुत्रः जातः ।

कुटुम्बस्य पोषणार्थं द्रोणेन धनसम्पादनं करणीयम् आपतितम् । परशुरामः दानशीलः धर्मशीलश्च इति वार्तां श्रुत्वा द्रोणः परशुरामसमीपं गतवान् । स्वपरिस्थितिं निवेदितवान् च ।

एतत् श्रुत्वा परशुरामः उक्तवान् - "मत्समीपे विद्यमानं सर्वम् अपि ब्राह्मणेभ्यः दत्तवान् अहम् । मदीयां भूमिं कश्यपाय दत्तवान् । मम समीपे इदानीम् अस्त्राणि केवलं सन्ति" इति ।

तदा द्रोणः उक्तवान् - "भवत्समीपे विद्यमानानि अस्त्राणि एव कृपया मह्यं ददातु" इति ।

परशुरामः स्वसमीपे स्थितानि अस्त्राणि सर्वाणि अपि द्रोणाय यच्छन् तेषाम् अस्त्राणाम् उपयोगः कथं करणीयः इति शास्त्ररीत्या तं बोधितवान् ।

अनन्तरं द्रोणः - 'बाल्यस्नेहितः द्रुपदः





धनसाहाय्यं कुर्यात्' इति आशया महाराजस्य द्रुपदस्य समीपं गतवान्। किन्तु महाराजे द्रुपदे अहम्भावः आसीत्। सः द्रोणं दृष्ट्वा अपि उपेक्षया 'भवान् कः इत्येव अहं न जानामि' इति उक्त्वा तं प्रेषितवान्।

एतस्मात् अपमानितः द्रोणः हस्तिनापुरं प्रति गत्वा स्वश्यालस्य गृहे अज्ञातरूपेण निवसति स्म।

कदाचित् कौरवाः नगरस्य बहिर्भागे कन्दुकेन क्रीडन्तः आसन्। तदा कन्दुकम् अकस्मात् कूपे पतितम्। ते कूपात् कन्दुकं निष्कासयितुं न शक्ताः। तस्मिन् समये वायुविहारार्थं तं प्रदेशम् आगतं द्रोणं दृष्ट्वा कौरवाः उक्तवन्तः - "अस्माकं कन्दुकं कूपे पतितम् अस्ति। कृपया भवान् तत् कन्दुकं कूपात् बहिः निष्कास्य ददातु" इति।

तदा द्रोणः - "वत्साः, भवन्तः सर्वे अपि भरतवंशे जाताः। तत्रापि कृपाचार्यस्य शिष्याः। अतः भवन्तः निश्चयेन धीराः शूराः च। एवं सति कन्दुकं कूपात् निष्कासयितुम् असमर्थाः वा भवन्तः ? इदानीं पश्यन्तु। मम अङ्गुलीयकम् अपि कूपे स्थापयित्वा, कन्दुकम् अङ्गुलीयकं च अहं बहिः निष्कासयामि" इति वदन् कूपे स्वकीयम् अङ्गुलीयकं क्षिप्तवान्।

तदा युधिष्ठिरः द्रोणम् उक्तवान् - "यदि भवता उक्तं कार्यं भवान् साधयिष्यति, तर्हि यावज्जीवं भवन्तं पोषयति कृपाचार्यः" इति।

अनन्तरं द्रोणः 'पश्यन्तु इदानीम्' इति वदन् कन्दुकम् उद्दिश्य बाणमेकं प्रयुक्तवान्। सः बाणः कूपस्य अन्तः गत्वा कन्दुके लग्नः अभवत्। अनन्तरं क्रमशः बाणस्य उपरि बाणः यथा लग्नः स्यात्, तथा बाणान् प्रयुक्तवान् द्रोणः। अनन्तरं सर्वेषां बाणानां साहाय्येन कन्दुकं बहिः आनीतवान्। एतत् दृष्ट्वा सर्वे अपि आश्चर्यचकिताः। ते पुनः उक्तवन्तः - "इदानीम् अङ्गुलीयकं बहिः आनयतु" इति।

अनन्तरं द्रोणः एकं बाणं मन्त्रयित्वा सः बाणः अङ्गुलीयके यथा लग्नः भवेत्, तथा प्रयुक्तवान्। पूर्वं कन्दुकं येन प्रकारेण बहिः आनीतवान्, तेन एव प्रकारेण अङ्गुलीयकम् अपि बहिः आनीतवान् द्रोणः।

एतस्याः घटनातः बालाः सर्वे अपि



दिग्भ्रान्ताः । अनन्तरं ते द्रोणं नमस्कृत्य पृष्टवन्तः - ''स्वामिन् ! एतादृशी अपूर्वा शक्तिः अस्माभिः कदापि न दृष्टा । भवान् कः ? कुतः आगतवान् ? अस्मत्तः साहाय्यं किमपि अपेक्षते वा भवान् ?'' इति ।

तदा द्रोणः उक्तवान् - ''भवन्तः तु बालाः । मम विषयः किमर्थं भवताम् ? भवन्तः एतां वार्तां भवतां पितामहं भीष्मं निवेदयन्तु । सः एव मम पूर्वापरं वदिष्यति'' इति ।

बालाः सर्वे भीष्मसमीपं गत्वा प्रवृत्तं सर्वं तं निवेदितवन्तः ।

एतत् श्रुत्वा भीष्मः द्रोणं सादरं नगरं प्रति आनायितवान् । अनन्तरं च द्रोणं पृष्टवान् - ''भवान् किंनिमित्तं हस्तिनापुरम् आगतवान् ?'' इति ।

तदा द्रोणः स्ववृत्तान्तं सर्वम् उक्त्वा - ''मम पित्रा अहम् आज्ञप्तः यत् - मया कृपाचार्यस्य अनुजा कृपी परिणेतव्या इति । पितुः वचनानुसारम् अहं कृपीं परिणीय पुत्रम् अश्वत्थामानं प्राप्तवान् । मम पुत्रः अश्वत्थामा 'मम सहपाठिनः सर्वे अपि गोक्षीरं पिबन्ति । अतः मह्यम् अपि गोक्षीरं ददातु' इति रोदिति स्म । धेनुं क्रेतुम् मम सामर्थ्यं नासीत् । अतः अहं जले पिष्टं योजयित्वा पुत्राय पानार्थं ददामि स्म । मया दीयमानम् एव गोक्षीरं मत्वा सन्तोषेण पिबति स्म मम पुत्रः । मम आश्रमे स्थिताः मम दारिद्र्यं दृष्ट्वा माम् उपहसन्ति स्म । दारिद्र्येण खिन्नः अहं मम सहाध्यायिनं द्रुपदं स्मृतवान् । कुटुम्बपोषणार्थं द्रुपदस्य साहाय्यं लभ्येत इति चिन्तयन् अहं पाञ्चालदेशं गत्वा, द्रुपदं दृष्टवान्, आवयोः पूर्वतनं स्नेहं स्मारितवान् च । किन्तु मदान्धः सः - 'भवतः परिचयः एव नास्ति मम । दरिद्रस्य भवतः, महाराजस्य मम च स्नेहः सर्वथा न युज्यते । आवश्यकं चेत् एकदिनस्य भोजनं दास्यामि' इति उक्तवान् । एतस्मात् कुपितः अहं मम पत्नीपुत्राभ्यां सह एतं कुरुदेशम् आगतवान् अस्मि'' इति उक्तवान् ।

द्रोणस्य वचनं श्रुत्वा भीष्मः उक्तवान् - ''भवान् कुरुदेशं प्रति आगतवान् इति तु अस्माकं सौभाग्यम् । भवतः याः आवश्यकताः सन्ति, तासां पूरणार्थम् अहं सर्वविधाः व्यवस्थाः कल्पयिष्यामि ।

भवन्तम् एव गुरुं मत्वा अहं भवतः आज्ञां शिरसा वहामि'' इति।

अनन्तरं केषुचित् एव दिनेषु भीष्मः कौरवान् पाण्डवान् च विद्याभ्यासार्थं द्रोणसमीपं प्रेषितवान्।

द्रोणः सर्वान् कौरवान् पाण्डवान् च उद्दिश्य उक्तवान् - ''विद्याभ्यासस्य समाप्तेः अनन्तरं मदीयं कार्यमेकं भवद्भिः करणीयं भवति'' इति।

द्रोणस्य वचनं श्रुत्वा अर्जुनं विहाय सर्वे अपि मौनम् आश्रितवन्तः। तदा अर्जुनः उक्तवान् - ''गुरुदेव! भवान् यत् वदति, तत् अवश्यं करोमि अहम्'' इति।

एतत् श्रुत्वा द्रोणः अतीव सन्तुष्टः। सः प्रीत्या अर्जुनम् आलिङ्गितवान्।

द्रोणस्य समीपे न केवलं कौरवाः पाण्डवाः च शिष्यत्वेन स्थित्वा धनुर्विद्यायाः अभ्यासं कुर्वन्ति स्म, अपि तु यादवकुमाराः अपि शिष्यत्वेन स्थित्वा धनुर्विद्यायाः अभ्यासं कुर्वन्ति स्म। सूतपुत्रः कर्णः अपि द्रोणस्य शिष्यः आसीत्।

दुर्योधनविषये कर्णस्य महान् अभिमानः, महती प्रीतिः च। सः तदा तदा पाण्डवान् उपहसति स्म, तेषाम् अपमाननं च करोति स्म।

द्रोणस्य वचनानुसारं श्रद्धया अस्त्राभ्यासम् अर्जुनः केवलं करोति स्म। अतः एव द्रोणः सर्वदा वदति स्म यत् - अर्जुनस्य प्रतिस्पर्धी भवितुम् अन्यः कोऽपि न समर्थः इति।

तदा तदा द्रोणः शिष्येभ्यः कलशान् दत्त्वा वदति स्म - 'जलम् आनयन्तु' इति।



सः पुत्राय अश्वत्थाम्ने विशालमुखयुतं कलशं ददाति स्म। अन्येभ्यः शिष्येभ्यः लघुमुखयुतं कलशं ददाति स्म। ये जलकलशं स्वीकृत्य शीघ्रम् आगच्छन्ति, तेभ्यः अनेकानि अस्त्ररहस्यानि पाठयति स्म द्रोणः।

विशालमुखयुतं कलशं स्वीकृत्य अश्वत्थामा कलशे शीघ्रं जलं पूरयित्वा, प्रथमं प्रत्यागच्छति स्म। एतं विषयं ज्ञात्वा अर्जुनः स्वकलशं लघुमुखयुतं चेदपि वरुणास्त्रम् उपयुज्य शीघ्रम् एव जलं पूरयित्वा अश्वत्थाम्ना सह एव द्रोणसमीपं गत्वा द्रोणेन पाठ्यमानानाम् अस्त्ररहस्यानाम् अभ्यासं स्वयम् अपि करोति स्म।

एतस्मात् कारणात् अर्जुनविषये अश्वत्थामा असूयाविष्टः सञ्जातः। किन्तु तं भावं न प्रकटयति स्म सः।

द्रोणस्य गृहे कदाचित् रात्रिसमये सर्वे अपि शिष्याः भोजनं कुर्वन्तः आसन्। तदा अकस्मात् आगतेन वेगवायुना दीपः निर्विण्णः अभवत्। दीपः नास्ति चेदपि भोजनकरणे न कोऽपि क्लेशः इति चिन्तयन् अर्जुनः 'अभ्यासः जातः इति कारणतः अन्धकारे अपि भोजनं कर्तुं शक्यते। तथैव अन्धकारे अपि बाणप्रयोगकरणम् अभ्यसितुं शक्यते एव' इति चिन्तितवान्।

तस्मात् दिनात् आरभ्य अर्जुनः अन्धकारे धनुर्विद्यायाः अभ्यासं कर्तुम् उद्युक्तः अभवत्। कदाचित् रात्रिसमये धनुष्टङ्कारं श्रुतवतः निद्रितस्य द्रोणस्य निद्राभङ्गः अभवत्। सः शयनात् उत्थाय आगतवान्। अन्धकारे धनुर्विद्यायाः अभ्यासं कुर्वन्तम् अर्जुनं दृष्ट्वा अतीव सन्तुष्टः द्रोणः प्रीत्या अर्जुनम् आलिङ्ग्य उक्तवान् – "वत्स! अर्जुन! धनुर्विद्यायां भवत्समानः अन्यः जगति यथा न स्यात् तथा भवन्तं धनुर्विद्यां पाठयिष्यामि" इति।

स्ववचनानुसारं द्रोणः समूहे युद्धकरणम्, रथानां मध्ये, गजानां मध्ये, अश्वानां मध्ये च युद्धकरणम्, बाणं विनैव अन्येषाम् आयुधानाम् उपयोगेन युद्धकरणम् इत्यादीन् बहून् विषयान् अर्जुनं पाठितवान्। तत्रत्यान् गूढान् अंशान् च तं बोधितवान्।





# यशस्वी उपायः

गौरीपुरनिवासिनी कात्यायनी स्वभावतः कलहप्रिया। कात्यायन्याः महती धनाशा। किन्तु तस्यां धनसञ्चयबुद्धिः सर्वथा नासीत्। विद्यमानया सम्पत्त्या एव वैभवजीवनं यापयति स्म सा। कात्यायन्याः पुत्रद्वयम्। प्रथमा लक्ष्मीः। द्वितीयः गोपालः। लक्ष्मी-गोपालयोः बाल्यकाले एव कात्यायन्याः पतिः दिवङ्गतः। अनन्तरं सा पत्या सम्पादितेन धनेन एव पुत्रौ पोषयति स्म। केषाञ्चित् दिनानाम् अनन्तरं सा लक्ष्म्याः विवाहं कारितवती। इदानीं गोपालः विवाहवयस्कः जातः अस्ति।

गोपालः विद्यावान्। तस्य उत्तमः उद्योगः आसीत्। गोपालाय कन्यां दातुं बहवः कन्यापितरः गोपालस्य गृहम् आगच्छन्ति स्म। किन्तु कात्यायनी पुत्रस्य उद्योगम् एव प्रधानीकृत्य वधूपक्षतः प्रभूतां वरदक्षिणां स्वीकर्तुम् इच्छति स्म। आगताः कन्यापितरः धनिकाः न इति ज्ञात्वा तान् प्रतिप्रेषयति स्म कात्यायनी।

गोपालस्य आशयः अन्यः एव आसीत्। तस्य गृहात् अनतिदूरे एव निर्मलायाः गृहम् अस्ति। कार्यशीला शान्तस्वभावयुता च निर्मला एव परिणेतव्या इति गोपालस्य इच्छा। किन्तु निर्मलया सह विवाहः सुलभतया न शक्यः इति जानाति स्म गोपालः। यतः निर्मलायाः गृहे आर्थिकी समस्या महती अस्ति। अपि च निर्मलायाः पितुः रामनाथस्य कात्ययन्याः च मध्ये बहुकालात् कुटुम्बद्वेषः आसीत्। सः द्वेषः इदानीम् अपि भस्मना आवृतः अग्निः इव आसीत्। एतत् सर्वं चिन्तयित्वा गोपालः चिन्तितवान् - 'माता कात्यायनी एतं विवाहं सर्वथा न अङ्गीकरोति' इति।

एतादृशपरिस्थितौ किं करणीयम् इति गोपालः बहुधा चिन्तितवान्। निर्मला एव



एतस्य परिहारोपायं चिन्तयेत् इति विचिन्त्य गोपालः रहसि निर्मलां दृष्ट्वा, स्वकीयम् आशयं निवेद्य – "मम माता यद्यपि कलहप्रिया, तथापि सा मम जन्मदात्री । अतः भवत्या एव तस्यां परिवर्तनम् आनेतव्यम् । एतद्विषये अहं तु असहायः अस्मि । यदि आवाभ्यां सुखजीवनं यापनीयं, तर्हि भवत्याः सहकारः अत्यावश्यकः । भवत्याः अपि यदि मयि अनुरागः अस्ति, तर्हि आवयोः विवाहार्थं भवती कश्चित् उपायं सूचयतु" इति उक्तवान् ।

सज्जने गुणवति च गोपाले निर्मलायाः अपि अनुरागः अस्ति एव । गोपालविषयकम् अनुरागं निवेदयितुं लज्जाम् अनुभवन्ती निर्मला शिरः अवनमय्य उक्तवती – "उपायः तु चिन्तयितुं शक्यः । किन्तु श्वश्र्वा अपि किञ्चित् वा क्लेशः अनुभोक्तव्यः भवति एव" इति ।

निर्मलायाः एतत् वचनं श्रुत्वा गोपालः मन्दहासपूर्वकम् उक्तवान् – "रोगः भयङ्करः इति ज्ञात्वा अपि तस्य रोगस्य निवारणं केवलं मधुरौषधेन एव करणीयम् इति दुराग्रहः सर्वथा नास्ति मम" इति ।

स्वविषयकं गोपालस्य अभिमानं विश्वासं च दृष्ट्वा सन्तुष्टा निर्मला कटाक्षेण एव कृतज्ञतां सूचयन्ती उक्तवती – "भवतु । यावच्छीघ्रं कमपि उपायं विचिन्त्य भवन्तं सूचयिष्यामि" इति ।

अनन्तरं द्वित्रेषु दिनेषु एव निर्मला पितुः साहाय्येन कञ्चित् उपायं विचिन्त्य गोपालं सूचितवती । गोपालः अपि निर्मलया उक्तं परिहारोपायम् अङ्गीकृतवान् ।

अनन्तरं सप्ताहाभ्यन्तरे एव काचित् घटना प्रवृत्ता ।

कदाचित् प्रातःकालसमये निर्मला स्वगृहस्य मुखद्वारं क्षालयितुम् इच्छन्ती बहिः आगतवती । तस्मिन् समये तत्र एकः वृद्धसंन्यासी प्रज्ञारहितः सन् पतितः आसीत् । एतत् दृष्ट्वा निर्मला अनुक्षणं पितुः साहाय्येन तं संन्यासिनं गृहस्य अन्तः नीत्वा तस्य औषधोपचारं कृतवती ।

किञ्चित्कालानन्तरं संन्यासी सचेतनः जातः । दिनद्वयानन्तरं पूर्णतः स्वस्थः अभवत् । तावता संन्यासिविषयकाः केचन

विचाराः ज्ञाताः।

१२० वर्षीयस्य तस्य संन्यासिनः नाम करुणानन्दः। गतेभ्यः ११० वर्षेभ्यः सः हिमालये एकाकितया जीवनं यापयन् बह्वयः लीलाः दर्शयति स्म। स्वगुरोः आदेशानुसारं निर्वाणप्राप्तितः पूर्वं देशसञ्चारं कुर्वन् आत्मना ज्ञातान् विषयान् करुणानन्दः, सज्जनान् बोधयति स्म। एवं देशसञ्चारसमये प्रयाणस्य श्रान्तिकारणतः वार्धक्यकारणतः च सः अचेतनः सन् निर्मलायाः गृहस्य पुरतः पतितवान् आसीत्।



ग्रामस्थैः सर्वैः अपि एषः विषयः ज्ञातः। केचन पुष्पाणि फलानि च स्वीकृत्य करुणानन्दस्य दर्शनार्थं गच्छन्ति स्म। कौचित् द्वौ केवलं करुणानन्देन सह आत्मीयतया सम्भाषणार्थम् अवकाशं प्राप्तवन्तौ आस्ताम्। तयोर्मध्ये कात्यायन्याः प्रतिवेशी गङ्गाधरः अपि अन्यतरः। करुणानन्दः गङ्गाधरम् उक्तवान् आसीत् - 'अपूर्वया कयाचित् दैवीशक्त्या भवन्तम् अनुगृह्णामि' इति।

कात्यायनी एतं विषयं ज्ञातवती। यद्यपि कात्यायनी कुटुम्बद्वेषकारणात् रामनाथस्य गृहं गन्तुं न इच्छति स्म, तथापि करुणानन्दस्य विषयं श्रुत्वा प्रभाविता सा - 'सकृत् करुणानन्दस्य दर्शनं कृत्वा, स्वगृहं प्रति तस्य आह्वानं कृत्वा, श्रद्धया तस्य सेवां कुर्वती तस्य अनुग्रहं प्राप्नोमि' इति विचिन्त्य रामनाथस्य गृहं गतवती।

कात्यायनी यदा रामनाथस्य गृहं गतवती, तदा करुणानन्दस्य दर्शनं शीघ्रं न जातम्। यतः करुणानन्दः व्रतधारी सन् गृहस्य अन्तः उपविश्य निर्मलां कञ्चित् मन्त्रम् उपदिशन् आसीत्। तावता निर्मलायाः पितुः रामनाथस्य द्वारा कात्यायनी ज्ञातवती - 'संन्यासी करुणानन्दः निर्मलां महालक्ष्मीमन्त्रम् उपदिशन् अस्ति। वर्षे एकवारं प्राप्यमाणे मूलानक्षत्रयुक्ते पूर्णिमासहिते शुक्रवासरे सः मन्त्रः यदि अष्टवारं जप्यते, तर्हि गृहस्य सर्वकोणेषु अपि अष्टोत्तरशतं सुवर्णनाणकानि प्रत्यक्षानि भवन्ति' इति।

रामनाथस्य एतत् वचनं श्रुतवत्याः कात्यायन्याः मनसि विचारः आगतः यत् - निर्मलां स्नुषात्वेन स्वीकरोमि इति। तावता



करुणानन्देन क्रियमाणः मन्त्रोपदेशः समाप्तः आसीत् । तदा कात्यायनी अन्तः गत्वा करुणानन्दं साष्टाङ्गं प्रणम्य सविनयं प्रार्थितवती – 'कृपया मम गृहम् आगच्छतु' इति।

तदा करुणानन्दः उक्तवान् – "इदानीं भवत्याः गृहं प्रति आगमनं न शक्यते। यतः सप्ताहात् अधिककालम् एकत्र वासः न करणीयः इति मम गुरुणा आज्ञप्तः अस्मि अहम् । षण्मासानन्तरं – तन्नाम आगामिश्रावणमासे – अहं पुनः अत्र आगमिष्यामि । श्रावणमासे निर्मला प्रथमतया महालक्ष्मीमन्त्रं जपिष्यति । मन्त्रम् उपदिष्टवन्तं मां निर्मला साग्रहं प्रार्थितवती अस्ति – श्रावणमासे पुनरपि अत्र आगत्य मया एव पूजा कारणीया इति। अतः श्रावणमासे अहम् अत्र आगमिष्यामि। तदा भवत्याः गृहम् अपि आगमिष्यामि" इति।

एतत् श्रुत्वा कात्यायनी करुणानन्दं सविनयं नमस्कृत्य उक्तवती – "स्वामिन्। मम अन्यः एकः आशयः अस्ति" इति।

"भवत्याः आशयं निस्सङ्कोचं वदतु" इति उक्तवान् करुणानन्दः।

तदा कात्यायनी उक्तवती – "भवतः अभिमानपात्रभूता निर्मला विनयशीला गुणवती च। तस्याः बाल्यात् अपि अहं तां जानामि। मम इच्छा अस्ति – तां स्नुषात्वेन स्वीकरोमि इति। किन्तु निर्मलायाः पितुः मद्विषये गौरवम् एव नास्ति" इति।

एतत् श्रुत्वा संन्यासी करुणानन्दः क्षणकालं नेत्रे निमील्य अनन्तरं ताम् उद्दिश्य – "भवत्याः एकः एव पुत्रः खलु ! सः कार्यालये कार्यं करोति खलु ?" इति पृष्टवान्।

"आम् । स्वामिन् !" इति सन्तोषेण उक्तवती कात्यायनी।

तस्मिन् समये रामनाथः गृहात् बहिः केनचित् सह सम्भाषणं कुर्वन् आसीत् । करुणानन्दः रामनाथम् आहूय तम् उक्तवान् – "एतस्याः कात्यायन्याः पुत्रः अतीव सज्जनः, गुणवान् च। सः भवतः पुत्र्याः निर्मलायाः अनुरूपः वरः" इति।

रामनाथः सविनयं करुणानन्दं नमस्कुर्वन् उक्तवान् – "भवतः वचनम् अवश्यं पालयिष्यामि" इति।

एकमासाभ्यन्तरे एव रामनाथः गोपाल-निर्मलयोः विवाहं निर्वर्तितवान् । विवाहानन्तरं निर्मला पतिगृहम् आगतवती। सा विशालम् उद्यानं कर्मकराणां द्वारा स्वच्छीकृत्य बहुविधानि शाकसस्यानि आरोपितवती । सा महिषीद्वयं क्रीत्वा उद्यानस्य कोणे एव एकं कुटीरं निर्माय तत्र महिषीद्वयं बद्धवती, क्षीरविक्रयणं च आरब्धवती।

चत्वारः मासाः अतीताः । शाकाना क्षीरस्य च विक्रयणेन महान् लाभः अभवत्। तेन कात्यायनी कृतम् ऋणं सर्वं प्रत्यर्प्य किञ्चित् धनं सञ्चितवती अपि।

स्नुषा निर्मला कस्यापि मन्त्रस्य पठनं विना एव धनं सम्पादयन्ती अस्ति इति कात्यायनी अतीव सन्तुष्टा । तथापि सा आगामिनि श्रावणमासे स्नुषया महालक्ष्मी-मन्त्रपठनपूर्वकं सम्पाद्यमानानि सुवर्ण-नाणकानि एव प्रतीक्षमाणा आसीत्।

कानिचन दिनानि अतीतानि । श्रावणमासः सम्प्राप्तः । कदाचित् प्रातःकालसमये एव संन्यासी करुणानन्दः रामनाथगङ्गाधराभ्यां सह कात्यायन्याः गृहम् आगतवान् । संन्यासिनं दृष्ट्वा महता सन्तोषेण अतिथिसत्कारार्थम् उद्युक्तां कात्यायनीम् उद्दिश्य संन्यासी करुणानन्दः - ''किमिदं कात्यायनि ! गृहे महान् सन्तोषः दृश्यते । मन्त्रपठनं विना एव भवत्याः गृहं प्रति साक्षात् देवी महालक्ष्मीः एव आगता अस्ति इव भाति'' इति वदन् स्वकीयं कृतकं



श्मश्रु जटां च निष्कासितवान्।

एतत् दृष्ट्वा दिग्भ्रान्ता कात्यायनी - 'का एषा वञ्चना !' इति वदन्ती पुनरपि किमपि वक्तुम् उद्युक्ता । तावता करुणानन्दवेषधारी वृद्धः कात्यायनीं सान्त्वयन् उक्तवान् - ''मम विषये आरोपकरणतः पूर्वम् 'अहं कः' इति भवत्या ज्ञायते वा इति मां परिशीलयतु'' इति।

तदा कात्यायनी सूक्ष्मं तस्य वृद्धस्य मुखं परिशील्य परिचयं प्राप्य 'भवान् वा ?' इति वदन्ती शिरः अवनतवती।

तदा वृद्धः समाधानेन - ''मम परिचयः प्राप्तः खलु भवत्या'' इति वदन् गोपालं दृष्ट्वा - ''वत्स ! अहं भवतः पितुः पितृव्यः। भवतः मातुः कनिष्ठः मातुलः । पूर्वम् अहं

नाटके अभिनयं कर्तुम् इच्छन् ग्रामं ग्रामं, नगरं नगरं च अटामि स्म। मम एतं स्वभावं भवतः पितामहः-तन्नाम मम अग्रजः - न इच्छति स्म । मम स्वभावे परिवर्तनम् आनेतुम् अनिच्छन् अहम् अन्यं ग्रामं गतवान्। वृद्धौ श्वश्रू-श्वशुरौ बहुधा पीडयन्ती भवतः माता तौ गृहात् निष्कासितवती । अनन्तरं तौ मरणपर्यन्तम् अपि मया सह सुखेन एव जीवितवन्तौ। तथापि तौ तदा तदा पुत्रं स्मरन्तौ दुःखम् अनुभवतः स्म'' इति उक्त्वा कात्यायनीम् उद्दिश्य ''कात्यायनि ! मया उक्तं सर्वं सत्यं खलु !'' इति पृष्टवान्।

एतत् सर्वं श्रुत्वा कात्यायनी लज्जया शिरः अवनमय्य स्थितवती। वृद्धः क्षणकालं मौनं स्थित्वा गोपालम् उक्तवान् - ''एतं विषयं रामनाथः गङ्गाधरः च जानीतः । भवान् यदा निर्मलां परिणेतुम् इष्टवान्, तदा निर्मलया कृतायां योजनायां संन्यासिपात्रत्वेन माम् अङ्गीकारितवन्तौ गङ्गाधरः रामनाथः च। अनन्तरं प्रवृत्तं सर्वं भवान् जानाति एव'' इति।

वृद्धः पुनः कात्यायनीम् उक्तवान् - ''श्वश्रू-श्वशुरौ एव पीडितवती भवती महादुष्टा। तादृश्याः अपि भवत्याः स्नुषात्वेन निर्मला आगतवती इति तु भवत्याः सौभाग्यम्। एतस्य सौभाग्यस्य कारणीभूतः गोपालः एव । निर्मलायाः सद्गुणाः भवत्या ज्ञाताः भवन्तु इत्येव अहं षण्मासानाम् अवधिं कल्पितवान् आसम् । इतःपरं वा विवेकेन व्यवहरतु । नो चेत् निर्मला अपि भवती इव व्यवहरेत्'' इति।

एतत् सर्वं श्रुत्वा कात्यायनी दुःखेन अश्रूणि स्रावयन्ती उक्तवती - ''मातुल ! इदानीम् अहं मम दोषं ज्ञातवती अस्मि । निर्मला मम स्नुषात्वेन आगता इति तु वस्तुतः मम सौभाग्यम् एव। षण्मासावधौ मम गृहस्य परिस्थितिं पूर्णतया परिवर्तितवती मम स्नुषा निर्मला वस्तुतः महालक्ष्मीः एव'' इति।

कात्यायन्यां जातं परिवर्तनं दृष्ट्वा संन्यासिवेषधारी वृद्धः अन्ये सर्वे च अतीव सन्तुष्टाः।





# अहम्भावः

बहुभ्यः वर्षेभ्यः पूर्वं कुमुदनामकः मुनिवरः विष्णुम् उद्दिश्य घोरं तपः कृतवान् । केषाञ्चित् दिनानाम् अनन्तरं विष्णुः लक्ष्म्या सह प्रत्यक्षः जातः । तदा कुमुदः भक्त्या विष्णुं साष्टाङ्गं नमस्कृतवान् । एतस्मात् सन्तुष्टः विष्णुः कुमुदम् उक्तवान् - ''अभीष्टं वरं प्रार्थयतु'' इति ।

कुमुदः काम् अपि अपेक्षां विना केवलं विष्णोः दर्शनाभिलाषी सन् तपः कृतवान् आसीत् । अतः तस्मिन् समये 'कीदृशः वरः प्रष्टव्यः' इति न ज्ञातं कुमुदेन ।

तदा लक्ष्मीदेवी कुमुदस्य मनोभावम् अवगत्य उक्तवती - ''वत्स ! भवतः भक्त्या आवां नितरां सन्तुष्टौ । अविचिन्त्य इदानीम् एव वरः प्रष्टव्यः इति नास्ति । आवां पुनरपि अत्र आगमिष्यावः । तावति काले सम्यक् विचिन्त्य भवदभीष्टं वरं प्रष्टुं शक्नोति भवान्'' इति ।

स्वतपः सफलं जातम् इति मुनिवरः कुमुदः अतीव सन्तुष्टः । सः स्वकीयम् आश्रमं गत्वा एतां सन्तोषवार्तां सर्वान् शिष्यान् उक्तवान् ।

गुरुः कुमुदः घोरं तपः कृत्वा विष्णुदर्शनं प्राप्तवान् इति ज्ञात्वा तस्य शिष्याः आश्चर्यचकिताः । विष्णुः वरेण कुमुदम् अनुगृहीतवान् चेदपि कुमुदेन कापि अपेक्षा न प्रकटिता इति यत्, ततः सन्तुष्टाः शिष्याः कुमुदस्य त्यागबुद्धिं बहुधा प्रशंसितवन्तः ।

शिष्याणां प्रशंसाकारणतः कुमुदे अहम्भावः उत्पन्नः । अहम्भावात् सः चिन्तितवान् यत् - मादृशः श्रेष्ठः मुनिवरः जगति एव नास्ति इति ।

कदाचित् कुमुदः शिष्यैः सह स्नानार्थं गङ्गानदीं गतवान् आसीत् । तस्मिन् समये गङ्गानद्यां स्नात्वा आगच्छन् आसीत् रैवतनामकः राजर्षिः । रैवतस्य दर्शनात्

कुमुदस्य शिष्याणां सन्देहः उत्पन्नः यत् पत्नीपुत्रवान् एषः कीदृशः ऋषिः स्यात् इति । शिष्याः स्वसन्देहं कुमुदं निवेदितवन्तः ।

तदा कुमुदः रैवतं तिरस्कारेण पश्यन् उक्तवान् – "ये सर्वसङ्गपरित्यागिनः अरण्ये पर्णानि एव खादन्तः घोरं तपः कुर्वन्ति, तेषाम् एव देवदर्शनं दुर्लभम् । एवं सति एतादृशाना कथं वा ऋषिनाम्ना व्यवहारः इति मया तु न ज्ञायते" इति ।

यद्यपि कुमुदः रैवतविषये स्वाभिप्रायम् उक्तवान्, तथापि राजर्षेः रैवतस्य ऋषित्वम् इति नाम कथं सङ्गच्छते इति जिज्ञासा तु आसीत् एव तस्य । 'सद्यः एव पुनरपि विष्णोः दर्शनं भवत्येव । तदा रैवतविषयं पृष्ट्वा संशयनिवारण करिष्यामि' इति चिन्तयन् समाधानं प्राप्तवान् कुमुदः ।

स्ववचनानुसारं विष्णुः एकमासाभ्यन्तरे एव लक्ष्म्या सह प्रत्यक्षः जातः । तदा अपि वरस्य याचनां विस्मृतवान् कुमुदः विष्णुं प्रार्थितवान् यत् – राजर्षिरैवतविषयकः मम सन्देहः कृपया भवता निवारणीयः इति ।

एतत् श्रुत्वा महाविष्णुः मन्दहासपूर्वकं – "कुमुद ! मम तु भक्तिः एव प्रधाना । परिशुद्धं मनः विना संन्यासजीवनस्य आचरणेन अपि न किमपि प्रयोजनम् । किन्तु एतद्विषये भवतः सन्देहः यदि पूर्णतया निवारणीयः, तर्हि भवान् श्रीशैलसमीपस्थं स्वर्णपुरं गच्छतु । स्वर्णपुरे सुबुद्धिनामकः कश्चित् अस्ति । तस्य सहवासेन भवतः सन्देहः परिहृतः भविष्यति" इति उक्त्वा अदृश्यः अभवत् ।



अनन्तरदिने एव कुमुदः स्वशिष्यैः सह श्रीशैलं प्रति प्रस्थितवान् । बहूनां दिनानाम् अनन्तरं श्रीशैलं प्राप्तवान् च ।

कदाचित् प्रातःकालसमये कुमुदः शिष्यैः सह स्नानार्थं पातालगङ्गां प्रति गतवान् । स्नानकरणसमये कश्चित् मकरः कुमुदस्य पादं गृहीतवान् ।

गुरोः कुमुदस्य पादं गृहीतवन्तं मकरं दृष्ट्वा शिष्याः भयात् उच्चैः क्रन्दनं कृतवन्तः । किन्तु कुमुदः न भीतः । अपि तु सः धैर्येण मकरम् एव तीक्ष्णदृष्ट्या दृष्टवान् । अपरक्षणे एव कुमुदस्य तपश्शक्तेः प्रभावतः मकरः प्राणान् त्यक्तवान् ।

एतस्याः घटनायाः कारणतः कुमुदे अहम्भावः अधिकः जातः ।

द्वित्राणां दिनानाम् अनन्तरं कुमुदः स्वर्णपुरं गतवान् । कुमुदः यदा सुबुद्धेः गृहं गतवान्, तस्मिन् समये सुबुद्धिः गृहे न आसीत् । सुबुद्धेः पत्नी गृहस्य मुख्यद्वारसमीपे एव उपविश्य छिन्नायाः पुरातनशाटिकायाः अञ्चलं सीवयन्ती आसीत् । गृहं प्रति आगतं कुमुदं सा उक्तवती - "मम पतिः गृहे नास्ति । तस्य आगमनपर्यन्तं भवान् अत्रैव वरण्डे उपविशतु" इति ।

'मादृशः श्रेष्ठः मुनिवरः गृहं प्रति आगतः चेदपि सादरं सगौरवं च आतिथ्यं न कृतवती एषा गृहिणी' इति चिन्तयन् कुमुदः कुपितः । सः द्वारस्य पार्श्वे एव उपविष्टवतीं सुबुद्धेः पत्नीं तीक्ष्णदृष्ट्या दृष्टवान् । किन्तु मकरः इव सा प्राणान् न त्यक्तवती ।

एतस्मात् स्वतपोबलविषये किञ्चिदिव अविश्वासः उत्पन्नः कुमुदे । तावता सुबुद्धिः



गृहम् आगतवान् । आगतम् अतिथिं कुमुदं सादरं सत्कृतवान् च । किञ्चित्कालानन्तरं सर्वेभ्यः भोजनं सज्जीकृतवती सुबुद्धेः पत्नी ।

कुमुदः भोजनार्थम् उपविष्टवान् । पाकः अतीव शीतलः आसीत् । एतस्मात् कुपितः कुमुदः उपहासमिश्रितेन स्वरेण उक्तवान् - "सुबुद्धे ! पाकः अतीव उष्णः अस्ति खलु !" इति ।

कुमुदस्य कथनस्य भावः अवगतः सुबुद्धिना । अतः सः कुमुदम् उद्दिश्य - "स्वामिन् ! क्षणकालं तिष्ठतु । चामरेण वीजयामि" इति वदन् चामरेण वीजितवान् ।

अपरक्षणे एव भोजनपर्णे परिवेषिताः अन्नसारादयः उष्णाः अभवन् । एतेन कुमुदः आश्चर्यचकितः । भोजनं समाप्य हस्तप्रक्षालनार्थं कुमुदः कूपसमीपं गतवान् । तत्र कूपस्य उपरि दृश्यमानं रज्ज्वा बद्धं लम्बमानं घटं दृष्ट्वा कुमुदः आश्चर्यचकितः ।

तावता सुबुद्धेः पत्नी - "जलस्य उद्धरणसमये पतिः माम् आहूतवान् इति कारणतः अहं जलोद्धरणकार्यम् अर्धे एव त्यक्त्वा गतवती" इति वदन्ती तत्र आगतवती ।

एतस्मात् 'जगति एव मादृशाः श्रेष्ठाः तपोधनाः न सन्ति । संसारपाशेन बद्धाः सर्वे अपि अनीतियुताः' इति चिन्तितवतः कुमुदस्य गर्वभङ्गः जातः ।

अनन्तरं कुमुदः भक्त्या सुबुद्धिं नमस्कुर्वन् - "श्रीमन् ! भवान् अत्यन्तं श्रेष्ठः महानुभावः च । सर्वसङ्गपरित्यागिनः सन्तः अपि ये तपः न कुर्वन्ति, तैः अपि मोक्षः प्राप्यते वा ?" इति पृष्टवान् ।

तदा सुबुद्धिः उक्तवान् - "परिशुद्धमनसा ये देवस्य आराधनं कुर्वन्ति, तैः मोक्षः प्राप्यते एव । येषां मनः परिशुद्धं नास्ति, ते घोरं तपः कुर्वन्ति चेत् अपि तैः मोक्षः न प्राप्यते" इति ।

एवंरीत्या कुमुदस्य सन्देहः परिहृतः । तस्य अहम्भावः अपि अपगतः । अनन्तरकाले मुनिवरः कुमुदः निर्मलमनसा भगवन्तं ध्यायन् मोक्षं प्राप्तवान् ।



# प्रकृतिवैचित्र्याणि

### ग्रहणशक्तिः

र्याटिल्नामकः सर्पः सामान्यतः रात्रिसमये एव आहारस्य अन्वेषणं करोति । एषः सर्पः स्वनेत्रयोः नासिकायाः च मध्यभागस्थस्य रन्ध्रस्य द्वारा उष्णतां सुलभतया गृह्णाति । एवम् उष्णतायाः ग्रहणे या शक्तिः आवश्यकी सा एव शक्तिः एतस्य सर्पस्य आहारान्वेषणे बहुधा उपयोगिनी भवति ।






### बृहत्तमः वन्यमार्जारः

अमेरिकादेशस्य दक्षिणभागेषु अरण्येषु 'जागुवार्' नामकाः मार्जाराः दृश्यन्ते । वन्यमार्जारेषु एव आकारेण बृहत्तमाः एते ३०० पौण्ड्भारयुताः भवन्ति । तन्नाम एतेषां भारः चित्रक-व्याघ्रयोः अपेक्षया अपि अधिकः भवति । एतेषां शरीरस्य चर्म पीतवर्णीयं सत् मध्ये मध्ये वृत्ताकारक-कृष्ण-कालकयुतं भवति ।

### जगति एव प्रथमतया डयनकलां ज्ञातवन्तः पतङ्गाः

कोडतिनामकाः पतङ्गाः सामान्यतः ३००,०००,००० वर्षेभ्यः पूर्वम् एव भूमौ आसन् इति श्रूयते । एते एव पतङ्गाः प्रथमतया डयनकलां ज्ञातवन्तः इत्यपि विज्ञानिनः अभिप्रयन्ति । केषाञ्चन कोडतिपतङ्गानां पक्षयोः दैर्घ्यं ७० सें.मी. अपि भवति ।



Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!










It's time to go back to school again. Time for text books. Time for games. Time to meet old friends. And make new ones. Time to start studying again. Because there's so much to learn about the world around you.



From all of us here at Chandamama, have a great year in school. And remember to tell u what you've learnt everyday, when you come home from school !



THE
HANDAMAMA
OLLECTION

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां एप्रिल् - १९९५ मासे प्रकटयिष्यामः ।


Devidas Kasbekar


B.V. Ravichandran

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा फेब्रवरी - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

---

### 'डिसेम्बर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **जीवनसन्ध्याकाले चिन्ताच्छायाक्रान्तौ ।**

द्वितीयचित्रम् - **रम्ये सागरतीरे स्वेच्छाविहरणशीलौ ।**

प्रेषकः - श्री सनत्कुमार उपाध्यायः, श्री शारदापीठम्, द्वारका, जामनगरम् - ३६१३३५


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) - रू. ६०.००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---


The stories, articles and designs contained herein are exclusive property of the Publishers and copying or adapting them in any manner will be dealt with according to law.

अपने प्यारे चहेतें के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 117.00 वायु सेवा से रु. 264.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 123.00 वायु सेवा से रु. 264.00

**अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा**
**'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:**

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

# १० अंतर बताओ





जवाब :

१. फूलों की पंखुड़ियां ज्यादा हैं.
२. तोते की चोंच खुली है.
३. तोते की गर्दन पर लाल पट्टी है.
४. लड़की की आखें खुली हैं.
५. लड़की मुस्कुरा रही है.
६. फ्रॉक पर सितारे बने हैं.
७. लड़की के कंगन पर हीरे जड़े हैं.
८. कुत्ते की जीभ बाहर है.
९. प्लेट पर पारले का नाम लिखा है.
१०. प्लेट में मैंगोबाइट रखी हैं.






everest/93/PP/170-hn